श्री काशी संस्कृत ग्रन्थमाला १४१



श्रीगणेशदैवज्ञविरचितः

# जातकालङ्कारः

दैवज्ञप्रवर-श्रीहरभानुशुक्लकृतसंस्कृतटीकया पण्डित श्रीदीनानाथ झा ज्योतिषाचार्य कृत भावबोधिनी-हिन्दीटीकया च सनाथीकृतः

मैथिलपण्डित-श्रीकपिलेश्वरशास्त्रिणा
संशोधनपुरस्सरं सम्पादितः





चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

॥ श्रीः ॥

# काशी संस्कृत ग्रन्थमाला

१४१



श्रीगणेशदैवज्ञविरचितः

# जातकालङ्कारः

दैवज्ञप्रवर-श्रीहरभानुशुक्लकृतसंस्कृतटीकया पण्डित श्रीदीनानाथ झा ज्योतिषाचार्य कृत भावबोधिनी-हिन्दीटीकया च सनाथीकृतः

मैथिलपण्डित-श्रीकपिलेश्वरशास्त्रिणा

संशोधनपुरस्सरं सम्पादितः



**चौखम्भा संस्कृत संस्थान**

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० १३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी

मुद्रक : विद्याविलास प्रेस, वाराणसी

संस्करण : चतुर्थ, वि० संवत् २०३६

मूल्य : रु० ८-००





अन्य प्राप्तिस्थान

चौखम्भा विश्वभारती

पो० बाक्स नं० ५४

चौक ( चित्रा सिनेमा के सामने )

वाराणसी-२२१००१ ( भारत )

फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
141
*****

# JĀTAKĀLAṄKĀRA

( A handbook on astrological calculations of a nativity )

OF

GAṆEŚA DAIVAJÑA

*with Sanskrit & 'Bhāvabodhinī' Hindi Commentary*

By
HARABHĀNU ŚUKLA
DĪNĀNĀTHA JHĀ,
Jyotiṣācārya

Edited by
KAPILEŚVARA ŚĀSTRĪ

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publisher and Distributor of Oriental Cultural Literature*
P. O. Chaukhambha, P. Box No. 139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI ( INDIA )

# भूमिका

जगत्के प्रत्येक प्रदेश और सम्प्रदाय में यह सिद्धान्त माना गया है कि संसारके प्रत्येक ( चराचर ) प्राणियोंकी शुभाशुभ स्थिति गमनगत ग्रह–किरणोंके संयोगवश होती है। जीवमात्रके पाञ्चभौतिक देहपिण्डपर उन पञ्चभूताधिप ग्रहोंका जैसा सम्बन्ध रहता है तदनुसार जीवोंको सुख-दुःखादि भोगने पड़ते हैं। इस विषयको जाननेके लिये हमारे प्राक्तन नारद-व्यास-वसिष्ठादि महर्षियों और वराह प्रभृति आचार्योंने बड़े-बड़े ग्रन्थरत्न बनाये, जिनमें सांसारिक प्राणियोंके प्रत्येक प्रायोजनिक बातों के उल्लेख भली भाँति किये गये हैं। परन्तु, वर्त्तमान दिनोंमें युगधर्मके प्रभावसे आजके मनुष्योंके लिये उन ग्रन्थरत्नोंका अध्ययनाध्यापन कठिन ही नहीं प्रत्युत असम्भव-सा देख कर उक्त प्राचीन संस्कृतिकी रक्षा और सौलभ्येन जनसाधारणके कल्याण-की कामनासे जातक ग्रन्थोंका सारांश संग्रह करके लघुकलेवर में 'श्रीगणेश-कवि' ने इस जातकालङ्कारकी रचना की। जिसके अन्दर आलङ्कारिक पद्योंके विन्यास और जातकोंके प्रत्येक प्रायोजनिक विषयोंके क्रमिक प्रतिष्ठान देखकर मर्मज्ञोंको भी कहना पड़ता है कि प्रकृत ग्रन्थके जन्मदाता 'श्रीगणेश' वस्तुतः श्रीगणेश थे। कविने इस ग्रन्थमें १२ भावों और ९ ग्रहोंके भेद से जातकके जन्मसे मरण पर्यन्त, उसके सभी विषयोंका विशद और विशुद्ध विचार किया है, अत एव इसमें सन्देह नहीं कि फलादेशकोंके लिये यह ग्रन्थ बड़ी सिद्धिकी तरह एक अपूर्व साधन है।

यह ग्रन्थ साधारणतः लोकरञ्जक होता हुआ आजकल फलित ज्यौतिष की आचार्य परीक्षामें स्थान पानेके कारण अत्यन्त उपयुक्त हो रहा है।

परीक्ष्य छात्रोंके लिये अन्वय, संस्कृत टीका और भाषाटीका बड़े ही काम की है। इस ग्रन्थके सर्वाधिकारी प्रकाशक बाबू श्रीजयकृष्णदास महोदयके कथनानुसार मैंने टीकाकारकी हस्तलिखित कापीका यथावसर संशोधन पुरस्सर यथास्थल ग्रन्थके आशयोंको स्पष्ट करने वाले शब्दोंका भी पर्याप्त सुधार करता हुआ श्री १०८ जगदम्बाकी कृपासे इस ग्रन्थकी पूर्णता में सफल हुआ। यदि अध्यापकों और छात्रोंको इसके सम्पादन से लाभ हुआ तो टीकाकार, सम्पादक और प्रकाशक-ये सभी कृतार्थ होंगे।

श्री शिवरात्रिः<br>
सं० २००१ वै०

विनीतः—<br>
पं० कपिलेश्वरशास्त्री ( चौधरी )

# विषयसूची

श्रीगणेशदैवज्ञविरचितः

# जातकालङ्कारः

## श्रीहरभानुकृत–संस्कृतटीकायुत–सान्वय–
## 'विद्योतिनी' भाषाटीकासमलङ्कृतः

---

### अथ संज्ञाध्यायः ॥ १ ॥

यस्त्वर्णब्रह्मविद्यापरिचयचतुरं श्रीशुकं व्यासपुत्रं
नत्वाऽऽचार्यं मुनीनां हरिपदकमले प्रेमविश्रामभाजाम् ।
स्विष्टेष्टं स्वेष्टदेवं श्रुतिसमधिगतं माधवं भावयित्वा
भावैर्व्याख्यातेऽस्मै प्रवरमतिमुदे जातकालङ्कृतश्रीः ॥ १ ॥

अथ ज्योतिर्वित्तिलकः छन्दोऽलङ्कृतिकाव्यरचनानिपुणः श्रीगणेशकविः श्रीशुकजातकानुरोधि जातकालङ्कारनामकं ग्रन्थं चिकीर्षुस्तदादौ निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारक्रमगतं भगवद्विभूतिगुरुगणेशभारतीकर्मप्रणिपातपरं वस्तुनिर्देशात्मकं मङ्गलमाचरति द्वाभ्यां शार्दूलविक्रीडिताभ्याम्—

सानन्दं प्रणिपत्य सिद्धिसदनं लम्बोदरं भारतीं
सूर्यादिग्रहमण्डलं निजगुरुं भक्त्या हृदब्जे स्थितम् ।
येषामङ्घ्रिसरोरुहस्मरणतो नानाविधाः सिद्धयः
सिद्धिं यान्ति लघु प्रयान्ति विलयं प्रत्यूहशैलव्रजाः ॥ १ ॥
सद्भावाकलितं पदार्थललितं योगाङ्गलीलार्चितं
श्रीमद्भागवतं शुकास्यगलितं यच्छ्रीधरस्वामिना ।
सुव्यक्तं क्रियते गणेशकविना गाथोक्ति तज्जातकं
वृत्तस्रग्धरया जनादिसुफलं ज्योतिर्विदां जीवनम् ॥ २ ॥

अन्वयः—येषामङ्घ्रिसरोरुहस्मरणतः नानाविधाः सिद्धयः सिद्धिं यान्ति, (तथा) प्रत्यूहशैलव्रजाः लघु प्रयान्ति, (एवम्भूतान्) सानन्दं हृदब्जे स्थितं सिद्धिसदनं लम्बोदरं भारतीं सूर्यादिग्रहमण्डलं निजगुरुं (च) भक्त्या प्रणिपत्य, सद्भावाकलितं पदार्थललितं योगाङ्गलीलार्चितं जनादिसुफलं ज्योतिर्विदां जीवनं शुकास्यगलितं

श्रीमद्भागवतं यत् श्रीधरस्वामिना सुव्यक्तं ( यथा कृतं तथैव ) मया गणेशकविना गाथोक्ति तज्जातकं जनादिसुफलं ज्योतिर्विदां ( जीवनम् ) वृत्तस्रग्धरया ( स्रग्धरया छन्दसा ) सुव्यक्तं क्रियते ॥ १-२ ॥

सानन्दमिति, सद्भावाकलितमिति च । गणेशनाम्ना ग्रन्थकरणकुशलेन मया तज्जातकं वृत्तस्रग्धरया सुव्यक्तं क्रियते स्पष्टार्थं यथा स्यात्तथा विधीयते इत्यर्थः। किं कृत्वा-भक्त्या तान् सिद्धिसदनभूतान् नत्वा नमस्कृत्य । तान् किंविधान्-येषाम-ङ्घ्रिसरोरुहस्मरणतः नानाविधा अनेकविधाः सिद्धयः कार्यसिद्धयः सिद्धिं पूर्णतां यान्ति । प्रत्यूहशैलव्रजाः विघ्नपर्वतसमूहाः 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । 'व्रजो गोष्ठाध्ववृन्देषु' इत्यमरः । लघु शीघ्रं विलयं यान्ति नश्यन्ति । 'लघु क्षिप्रमरं द्रुत'मित्यमरः। लघ्विति पदं शीघ्रतावाचकं, देहलीदीपकन्यायेनोभयत्रान्वेति । तान् कान् तत्राह-सिद्धिसदनं सिद्धिर्लक्ष्मीस्तस्याः सदनं गृहं निवासस्थानमिति यावत् श्रीनिवास इत्यर्थः । 'त्वं सिद्धिस्त्वं स्वधा स्वाहे'त्यादि लक्ष्मीस्तुत्यारम्भे सिद्धिशब्दस्य लक्ष्म्यां प्रयुक्तत्वात् सिद्धिर्लक्ष्मीरिति नित्यविकल्पोऽर्थः । कीदृशं सिद्धिसदनं-सान-न्दमानन्देन सहितं ब्रह्म आनन्दः 'आनन्दं ब्रह्मणो विद्वानि'ति श्रुतेः । सानन्दमिति विशेषणपदं भगवतोऽन्यत्र नोपपद्यते । ततोऽन्यदार्तमिति श्रुत्या ब्रह्माणमित्यत्रार्तवो-पदेशात्, हृदब्जे स्थितं हृदयकमलवासिनं 'सर्वस्य चाहं हृदि सन्निविष्टः' इति भगवद्वचनात् । भक्त्या प्रीतिपूर्वकानुस्मृत्या गुरुं श्रीमच्छिवाख्यं, लम्बोदरं विनायकं, भारतीं सरस्वतीं, सूर्यादिग्रहमण्डलं रव्यादीनां ग्रहाणां मण्डलं समूहं च प्रणिपत्य नमस्कृत्य शुकास्यगलितं शुकमुनिमुखात् भक्तिभूतं गलितं, गाथोक्ति गाथानां श्लोक-विधुराणां उक्तिर्व्यवहारो यस्मिन् तथाभूतम्, कथं व्यक्तं क्रियते यथा शुकास्यात् गलितं श्रीमद्भागवतं महापुराणं श्रीधरस्वामिना व्यक्तं कृतमित्यध्याहारः । कथंभूतं भागवतं जातकं च-सद्भावाकलितं सन् प्रशस्तो भावो विष्णुभक्तिः तेनाकलितं विशिष्टं, जातकपक्षे—सद्भावैस्तन्वादिद्वादशभावैस्तात्पर्यैर्वा विशिष्टं, पदार्थललितं पदार्थैः परमभक्त्युद्योतकैः श्रवणकीर्तनादिभिः ललितं रुचिरं, जातकपक्षे—पदार्थैः सानन्द-सदनादिभिर्मनोहरम् । योगाङ्गलीलार्चितं योगो भक्तियोगस्तस्याङ्गानि यमनियमप्राणा-यामप्रत्याहारध्यानधारणासमाधयः तेषां लीला उपदेशविशेषास्ताभिरर्चितं महितं, जातकपक्षे—योगाङ्गानि ग्रहभावादीनि तेषां लीला योग्यत्वेन घटनाविशेषास्ताभिर-र्चितं प्रशस्तमित्यर्थः । जनादिसुफलं जनादीनां श्रवणपठनाभ्यां सुफलं शोभनफलदम्, जातकपक्षे—सम्यक्फलवर्णनं यस्मिन् तत् । ज्योतिर्विदां जीवनं ज्योतिः परमात्मा

'नारायणः परं ज्योति'रिति श्रुतेः, तद्विदां ब्रह्मविदां जीवनं कालक्षेपयोग्यं, जातकपक्षे—ज्योतिर्विदां गणकानां जीविकाप्रदत्वाज्जीवनमित्यर्थः। वृत्तस्रग्धरया स्रग्धरावृत्तैरित्यर्थः। जात्यभिप्रायेणैकवचनोक्तिः। तस्य लक्षणं 'चत्वारो यत्र वर्णाः प्रथम' मित्यादि (१) ॥ १–२ ॥

जिन के चरणकमल के स्मरण करने से अनेक प्रकार की सिद्धियां सिद्ध होती हैं और बड़े से बड़े विघ्नरूपी पर्वतों के समूह नाश हो जाते हैं, ऐसे आनन्द युक्त हृदय कमल में स्थित श्रीलक्ष्मीनारायण, गणेश, सरस्वती, सूर्यादिग्रहों के मण्डल तथा अपने गुरु को भक्ति पूर्वक प्रणाम करके सुन्दर भावों से पूर्ण अनेकपदार्थों से सुशोभित योग ( भगवद्भक्ति के योग ) के अङ्गों ( यम–नियम–व्रतादि ) की लीलाओं ( दृष्टान्तों ) से पूजनीय, प्राणियों के लिये सुन्दर फल देने वाले ब्रह्मज्ञानियों के जीवन श्रीशुकदेव जी के मुखारविन्द से कहे हुए श्रीमद्भागवत महापुराण को जिस तरह श्रीधर स्वामीजी ने अपनी भक्तिरूपी टीका से स्पष्ट किया, उसी तरह मैं (गणेश दैवज्ञ कवि ) भी तन्वादि द्वादश भावों से युक्त सानन्द सदनादि पदार्थों से सुशोभित ग्रहों के योगों से युक्त शुभाशुभ फल देने वाला तथा ज्योतिषियों की जीविका को बढ़ाने वाला जो श्रीशुकदेव जी के मुखसे निकले हुये गद्य स्वरूप यह जातकशास्त्र है उसको स्रग्धरा छन्दों में प्रकाशित करता हूं ॥ १–२ ॥

ननु श्रीधरस्वामिवद्भक्तताऽपि शुकजातकव्याख्याने कर्तव्ये ग्रन्थारम्भो नोचेतिस्तत्राह—

यत्पूर्वं परमं शुकास्यगलितं सज्जातकं फक्किका-
रूपं गूढतमं तदेव विशदं कुर्वे गणेशोऽस्म्यहम्।
दैवज्ञः सुतरां यशःसुखमतिः श्रीहर्षदं स्रग्धरा-
वृत्तैश्चारु नृणां शुभायनपदं श्रीमच्छिवानुज्ञया ॥ ३ ॥

अन्वयः—सुतराम् यशःसुखमतिः दैवज्ञः अहम् गणेशः (अस्मि) यत् सज्जातकम् पूर्वं परमं शुकास्यगलितम् फक्किकारूपं गूढतमम् ( आसीत् ) तदेवाहम् नृणाम् श्रीहर्षदं शुभायनपदं श्रीमच्छिवानुज्ञया स्रग्धरावृत्तैश्चारु विशदं कुर्वे ॥ ३ ॥

यत्पूर्वमिति। गणेशनामाहं श्रीमच्छिवानुज्ञया वेदशास्त्रसम्पन्नशिवनाम्नो गुरोराज्ञया तत्प्रीत्यर्थमिति भावः। पूर्वभावकाले शुकास्यगलितं छन्दोरहितत्वात्

---

( १ ) चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वद्द्वादशाद्यौ मृगमदमुदिते षोडशान्त्यौ तथान्त्यौ ॥
रम्भास्तम्भोरुकान्ते मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो
बाले वर्णैः कवीन्द्रैः सुतनु विरचिता स्रग्धरा सा प्रसिद्धा ॥ २ ॥

फक्किकारूपं गूढतममतिशयेन गहनं न तु विशदं परमं सारार्थनिरूपणेनोत्कृष्टं यज्जा-तकं तदेव स्रग्धरावृत्तैश्चारु रुचिरं विशदं कुर्वे, फक्किकारूपस्य गूढतमस्य विश-दीकरणं श्लोकैरेवोचितमित्याशयः। कथंभूतो गणेशो दैवज्ञोऽदृष्टवेत्ता कर्तव्यमः-न्यभावितवार्तादर्शीति गूढभावः। सुतरां यशःसुखमतिः अतिशयितकीर्तिजन्यसुखे मतिर्यस्य सः, प्रयोजनगर्भमिदं विशेषणं यशोऽन्यसुखार्थमिति भावः। कीदृशं तं श्रीहर्षदं श्रियं हर्षं च ददाति तत्। शुभायनपदं शुभाश्चनानां शुभजातकानामाज-न्दखिष्विसदनादीनां पदं स्थानम् ॥ ३ ॥

प्राचीन काल में जिस जातक शास्त्र को श्रीशुकदेवजी ने फक्किका ( सूत्र ) के रूपमें अत्यन्त कठिन शब्दों से कहा था, आज उसी जातक शास्त्र की सरल रचना; सत्कीर्ति से सुख की इच्छा करने वाला मैं गणेश नामक दैवज्ञ, अपने 'शिव' नामक गुरु की आज्ञा से करता हूँ। प्रस्तुत ग्रन्थ मनुष्यों को सुख-सम्पत्तिदायक, आनन्द-वर्धक तथा प्रदिष्ट शुभ फलदायक होगा ॥ ३ ॥

ननु सत्कवीनां हर्षप्रदं त्वदीयं जातकं न स्यादित्याह—

भूयांसः सन्ति भूमौ निजमतिरचनाशालिनः काव्यगुम्फे
सङ्ख्यावन्तस्तथापि प्रचुरपरगुणानन्दलीलां भजन्ते।
चञ्चद्गाम्भीर्यपद्माविबुधविटपिनां जन्मसम्प्राप्तिभूतो
मर्यादां न स्वकीयां त्यजति किल महान्रत्नधामा सरस्वान् ॥४॥

अ०—भूमौ ( यद्यपि ) काव्यगुम्फे निजमतिरचनाशालिनः भूयांसः संख्यावन्तः सन्ति तथापि प्रचुरपरगुणानन्दलीलां भजन्ते। ( यतः ) चञ्चद्गाम्भीर्यपद्माविबुध-विटपिनां संप्राप्तभूतो महान् रत्नधामा सरस्वान् किल स्वकीयाम् मर्यादां न त्यजति॥४॥

भूयांस इति। भूमौ यद्यपि काव्यगुम्फे गद्यरचनायां निजमतिरचनाशालिनः निजमत्या काव्यरचना तया शालन्ते ते भूयांसो निपुणाः संख्यावन्तः कवयः सन्ति तथापि प्रचुरपरगुणानन्दलीलां भजन्ते प्रकृष्टपरगुणानुभवजन्यानन्दलीलामुद्वहन्ति नोपेक्षन्त इत्यर्थः। 'परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः' इत्युक्तत्वात्कृत्यानपरगुणानुभवजन्यप्रमोद एव तेषां लीलेति भावः। उक्तमर्थमर्थान्तरन्यासेन द्रढयति। चञ्चद्गाम्भीर्यं च पद्मा च विबुधविटपी चेति चञ्चद्गाम्भीर्यपद्माविबुधविटपिनः चञ्चन्तो द्योतमाना गाम्भीर्यादयश्च एतेषां जन्म सम्प्राप्तिभूतः आश्रयोऽपि रत्नधामापि रत्नगृहमपि सरस्वान् समुद्रः स्वकीयां मर्यादां स्थितिं न त्यजति, तथैव कवयोऽपि प्रमोदेर्जन्तीति भावः। गाम्भीर्यं निश्चलता, पद्मा लक्ष्मीः, विबुधविटपी पारिजातः। अत्र रत्नधाम इति पदं चिन्त्यम्। धामशब्दस्य

नपुंसकलिङ्गत्वात् अत्र तत्पुरुषसमासे 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि'त्यनुशासनेन रत्न-धामेति नपुंसकान्तत्वस्यादन्तत्वात् , अतो 'रत्नधामाप्युदन्वानि'ति पाठः समीचीनः ४

संसार में यद्यपि अपनी अपनी बुद्धि के अनुसार गद्यकाव्य की रचना करने वाले बहुत से विद्वान् हैं, तौ भी वे लोग एक दूसरे की उत्तम २ काव्यरचना देखकर आनन्द ही मानते हैं; क्योंकि तेज, गाम्भीर्य, लक्ष्मी और कल्पवृक्ष के जन्मदाता तथा महारत्नों का खजाना होते हुये भी समुद्र अपनी मर्यादा को नहीं त्यागते, इसी तरह इस छोटीसी रचना को देखकर गुणग्राही विद्वान् लोग आनन्द को ही प्राप्त होंगें ॥४॥

अथ तन्वादीनां सामान्यविशेषसंज्ञाः कथ्यन्ते यावदध्यायम् । आदौ तावल्ल-ग्नादीनां देहादिसंज्ञां तेषां सर्वेषां भावसञ्ज्ञां च शार्दूलविक्रीडितेनाह—

देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रं मृति-
र्भाग्यं राज्यपदं क्रमेण गदिता लाभव्ययौ लग्नतः ।
भावा द्वादश तत्र सौख्यशरणं देहं मतं देहिनां
तस्मादेव शुभाशुभाख्यफलजः कार्यो बुधैर्निर्णयः ॥ ५ ॥

अ०—लग्नतः क्रमेण देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रं मृतिः भाग्यम् राज्यपदं लाभव्ययौ ( एते ) द्वादशभावाः गदिताः । तत्र देहिनां देहं ( देहभावं ) सौख्यशरणं मतम् ( अतः ) तस्मादेव शुभाशुभाख्यफलजः बुधैर्निर्णयः कार्यः ॥५॥

देहं द्रव्यपराक्रमाविति । लग्नत इति ल्यब्लोपे पञ्चमी । लग्नमारभ्य-क्रमेण देहादयो द्वादश भावा गदिताः उक्तास्तत्र लग्नं देहो देहभावः, द्वितीयतृतीयौ द्रव्यपराक्रमभावौ, चतुर्थपञ्चमौ भावौ सुखसुतौ षष्ठः शत्रुः, सप्तमभावः कलत्रम् , अष्टमो मृतिः, नवमो भाग्यम् , दशमं राज्यपदम् , एकादशद्वादशौ लाभव्ययौ लाभव्ययनामकौ, तत्र तेषु देहिनां देहः सौख्यकारणं सुखाश्रयं मतम् , अतो बुधैर्ज्योतिर्विद्भिः तस्माद्देहादेव लग्नभावादेव शुभाशुभाख्यफलजो निर्णयो वक्ष्यमाणप्रकारेण कार्यः ॥ ५ ॥

लग्न से लेकर क्रमशः देह १, द्रव्य २, पराक्रम ३, सुख ४, सुत ५, शत्रु ६, कलत्र ७, मृति ८, भाग्य ९, राज्यपद १०, लाभ ११, और व्यय १२ ये बारह भावों के नाम हैं । इसमें देहभाव प्राणियों के सुख का स्थान माना गया है । इस लिये पण्डितों को चाहिये कि शुभाशुभ फलों का निर्णय देहभाव से ही करें ॥ ५ ॥

लग्नं मूर्तिस्तथाङ्गं तनुरुदयवपुःकल्पमाद्यं ततः स्वं
कोशार्थाख्यं कुटुम्बं धनमथ सहजं भ्रातृदुश्चिक्यसंज्ञम् ।
अम्बापातालतुर्यं हिबुकगृहसुहृद्वाहनं यानसंज्ञं
बन्ध्वाख्यञ्चाम्बुनीरं ... सुतमथ तनयं बुद्धिविद्यात्मजाख्यम् ॥६॥

अ०—लग्नम् मूर्त्तिः तथा अङ्गं तनुरुदयवपुः कल्पमाद्यम् । ततः स्वं कोशार्थाख्यम् कुटुम्बं धनम् । अथ सहजम् भ्रातृदुश्चिक्यसंज्ञम् । अम्बापातालतुर्यं हिबुकगृहसुहृद्वाहन यानसंज्ञं बन्ध्वाख्यमम्बु नीरं जलम् च । अथ तनयं बुद्धिविद्यात्मजाख्यम् ६

लग्नमिति । लग्न मूर्त्यादिशब्दवाच्यमिति मुनय ऊचुरिति तृतीयेनान्वयः । मूर्तिः अङ्गं तनुः उदयं वपुः कल्पमिति समाहारः । उदयो वपुः कल्पमाद्यं तन्वादयो लग्नपर्याया इति प्रथमभावः । ततोऽनन्तरं धनं स्वं कोशार्थाख्यं कोशश्चार्थश्च कोशार्थौ आख्या यस्य स तथा तत्तयोक्तं धनं स्वादिसंज्ञमूचुरित्यन्वयः । एवमग्रेऽपि सहजं भ्रातृदुश्चिक्यसंज्ञं तृतीयभावः । अम्बापातालतुर्यं हिबुकगृहसुहृद्वाहनं यानसंज्ञं याननामकमेवं बन्ध्वाख्यं बन्धुसंज्ञम् अम्बु नीरं जलमेते चतुर्थभावस्य पर्याया इति भावः । अथ तनयं बुद्धिविद्यात्मजाख्यं वाक्स्थानं पञ्चममित्यग्रिमेण संम्बन्धः स्यात् । पञ्चमभावस्यैते पर्यायाः ॥ ६ ॥

लग्न, मूर्त्ति, अङ्ग, तनु, उदय, वपु, कल्प और आद्य ये देहभाव ( प्रथम भाव ) की संज्ञा है । स्व, कोश, अर्थ, कुटुम्ब, और धन ये द्रव्यभाव ( द्वितीय भाव ) की संज्ञा है । सहज, भ्रातृ, और दुश्चिक्य ये पराक्रम भाव ( तृतीय भाव ) की संज्ञा है । अम्बा, पाताल, तुर्य, हिबुक, गृह, सुहृत्, वाहन, यान, बन्धु, अम्बु, नीर, और जल ये १२ सुखभाव ( चतुर्थ भाव ) की संज्ञा है । तनय, बुद्धि, विद्या और आत्मज—॥ ६ ॥

वाक्स्थानं पञ्चमं स्यात्तनुजमथ रिपुद्वेषिवैरिक्षताख्यं
षष्ठं जामित्रमस्तं स्मरमदनमदद्यूनकामाभिधानम् ।
रन्ध्रायुश्छिद्रयाम्यं निधनलयपदं चाष्टम मृत्युरन्यद्
गुर्वाख्यं धर्मसंज्ञं नवममिह शुभं स्यात्तपोमार्गसंज्ञम् ॥ ७ ॥

अ०—वाक्स्थानम्, पञ्चमं तनुजं स्यात् । अथ रिपुद्वेषिवैरिक्षताख्यं षष्ठं, जामित्रमस्तं स्मरमदनमदद्यूनकामाभिधानम्, अष्टमं रन्ध्रायुश्छिद्रयाम्यं निधनलयपदं च अन्यद् मृत्युः, नवमं गुर्वाख्यं धर्मसंज्ञम् इह शुभं तपो मार्गसंज्ञं स्यात् ॥ ७ ॥

वाक्स्थानमिति । अथ षष्ठं रिपुद्वेषिवैरिक्षताख्यमूचुः. रिपुद्वेषिवैरिक्षतनामकमित्यर्थः । अथ सप्तम जामित्रमस्तस्मरमदनमदद्यूनकामाभिधानमूचुः सप्तमं जामित्रास्तस्मरमदनादिनामकमित्यर्थः । अथाष्टमं रन्ध्रायुश्छिद्रयाम्यनिधनलयपदं मृत्युमष्टमं रन्ध्रादिनामकमित्यूचुः । अतो नवममिह शास्त्रे गुर्वाख्यं धर्मसंज्ञं शुभं तपोमार्गसंज्ञमूचुः ॥ ७ ॥

—वाक, पञ्चम और तनुज ये सुत (पञ्चम) भाव की संज्ञा है । रिपु, द्वेषि, वैरी, क्षत और षष्ठ ये शत्रु ( छठे ) भाव की संज्ञा है । जामित्र, अस्त, स्मर, मदन, मद, द्यून, और काम ये कलत्र ( सप्तम ) भाव की संज्ञा है । अष्टम, रन्ध्र, छिद्र, याम्य,

निधन, लयपद, और मृत्यु ये छिद्र ( अष्टम ) भाव की संज्ञा है। नवम, गुरु, धर्म, शुभ, तप, और मार्ग ये भाग्य ( नवम ) भाव की संज्ञा है ॥ ७ ॥

तताज्ञामानकर्मास्पदगगननभोव्योममेषूरणाख्यं
मध्यं व्यापारमूचुर्दशममथ भवं चागमं प्राप्तिमायम्।
इत्थं प्रान्त्यान्तिमाख्यं मुनय इह ततो द्वादशं रिष्फमाहु-
र्ग्राह्यं बुद्ध्वा प्रवीणैर्यदधिकममुतः संज्ञया तस्य तच्च ॥ ८ ॥

अ०—तताज्ञामानकर्मास्पदगगननभो व्योममेषूरणाख्यम् मध्यम् व्यापारम् दशमम् ऊचुः। अथ भवं च आगमम् प्राप्तिम् आयम् ऊचुः। ततः इत्थं मुनयः प्रान्त्यान्तिमाख्यम् द्वादशाख्यम् रिष्फम् आहुः। अमुतः यदधिकम् तत् तस्य संज्ञया बुद्ध्वा ग्राह्यम् ॥ ८ ॥

तातेति। अथ तनोर्दशमं तातादिनामकमूचुरिति, आज्ञा मानं कर्म आस्पदं गगनं नभो व्योम मेषूरणं मध्यं व्यापारमूचुरिति स्फुटा व्यक्तिः। अथ भवमेकादशमागमं प्राप्तिमायमूचुरित्थमुक्तम्। ततो द्वादशं प्रान्त्यान्तिमाख्यं प्रान्त्यनामकम्, अन्तिमं रिष्फं चाहुः। यदमुतः प्रोक्तारपर्यायसमुदायादधिकं दृश्यते तस्य तस्य यन्नामोक्तं नामसंज्ञायां पर्यायं बुद्ध्वा तत्तुल्यार्थं शुद्धं ग्राह्यं यथा वित्तशब्देन तत्तुल्यार्थे धनं सहोत्थशब्देन सहजभावो ग्राह्य इति ॥ ८ ॥

तात, आज्ञा, मान, कर्म, आस्पद, गगन, नभ, व्योम, मेषूरण, मध्य, और व्यापार ये सब ( दशम ) भाव की संज्ञायें हैं। भव, आगम, प्राप्ति और आय ये एकादश भाव की संज्ञायें हैं। प्रान्त्य, अन्त्य और रिष्फ ये तीन ( द्वादश ) भाव के संज्ञान्तर पठित हैं। यदि इनके अलावा कहीं कोई और नामान्तर आ जाय तो ग्रहण करना चाहिये (१) ॥ ८ ॥

आद्यं तुर्यं कलत्रं दशममिह बुधैः केन्द्रमुक्तं त्रिकोणं
पुत्रं धर्माख्यमुक्तं पणफरमुदितं मृत्युमाभात्मजार्थम्।
धर्मश्चापोक्लिमाख्यं व्ययरिपुसहजं कण्टकाख्यं हि केन्द्रं
चैतच्चातुष्टयं स्यात्त्रिकमिह गदितं वैरिरिःफान्तकाख्यम् ॥ ९ ॥

अ०—इह ( अस्मिन् शास्त्रे ) बुधैः आद्यं तुर्यं कलत्रं दशमं केन्द्रमुक्तम्। पुत्रं धर्मद्वियं त्रिकोणम् उक्तम्। मृत्युलाभात्मजार्थम् पणफरम् उदितम्। व्ययरिपुसहजं

---

(१) जैसे दूसरे अध्याय के छठे श्लोक में भ्रातृज शब्द से तीसरे का, गृहिणी शब्द से सातवें का और १९ वें श्लोक में विलय शब्द से आठवें का, पितृ शब्द से दशवें का और ११ वें श्लोक में [illegible] शब्द से पांचवें भाव का ग्रहण होता है।

भ्रमं च आपोक्लिमाख्यम् उदितम्। हि एतच्चतुष्टयं केन्द्रं कण्टकाख्यम् स्यात्। इह वैरिरिष्फान्तकाख्यम् त्रिकम् गदितम् ॥ ९ ॥

आद्यमिति। इह शास्त्रे बुधैः आद्यं चतुर्थं सप्तमं दशमं केन्द्रमुक्तं तथा कण्टकाख्यं चतुष्टयं च चतुष्टयमेव चातुष्टयम्। पञ्चमं नवमं त्रिकोणमुक्तम्, मृत्युलाभात्मजार्थमष्टममेकादशं पञ्चमं द्वितीयं पणफरमुक्तम्। नवमं द्वादशं षष्ठं सहजम् आपोक्लिमसंज्ञमुदितम्। वैरिरिःफान्तकाख्यं षष्ठद्वादशाष्टमं त्रिकमुक्तम् ॥ ९ ॥

इस शास्त्र में आचार्यों ने आद्य, चतुर्थ, सप्तम और दशम को केन्द्र संज्ञा कहा है। तथा पंचम और नवम को त्रिकोण कहा है। अष्टम, एकादश, पंचम और द्वितीय को पणफर कहा है। नवम, द्वादश, षष्ठ और तृतीय को आपोक्लिम कहा है और केन्द्र ( आद्य, चतुर्थ, सप्तम तथा दशम ) को चतुष्टय एवं कण्टक कहा है। इसी तरह छठें, आठवें और बारहवें को त्रिक कहा है ॥ ९ ॥

अथ मित्रशत्रूनेकेन शार्दूलविक्रीडितेनाह—

चन्द्रेज्यक्षितिजा रवीन्दुतनयौ गुर्विन्दुसूर्या क्रमा-
च्छुक्रार्कौ रविचन्द्रभूमितनया ज्ञार्कौ सितज्ञौ मताः।
अर्कादेः सुहृदः, समा अथ बुधः सर्वे हि शुक्रार्कजौ
भौमाचार्ययमा यमः कुजगुरू पूज्यः परे वैरिणः ॥ १० ॥

अ०—अर्कादेः क्रमात् चन्द्रेज्यक्षितिजाः रवीन्दुतनयौ, गुर्विन्दुसूर्याः, शुक्रार्कौ, रविचन्द्रभूमितनयाः, ज्ञार्कौ, सितज्ञौ, सुहृदः मताः। अथ हि बुधः, सर्वे, शुक्रार्कजौ, भौमाचार्ययमाः यमः कुजगुरू, पूज्यः समाः मताः, परे ( शेषाः ) वैरिणः स्युः ॥१०॥

चन्द्रेति। चन्द्रेज्यक्षितिजादयः अर्कादेः सुहृदः, बुधादयः समाः, अन्ये वैरिणो मताः मुनिभिरिति शेषः। सूर्यस्य चन्द्रेज्यक्षितिजाः सुहृदो मित्राणि, बुधः समोऽन्ये वैरिणः। रविबुधौ चन्द्रस्य मित्रे, सर्वे अन्ये समाः। गुर्विन्दुसूर्याः भौमस्य मित्राणि, शुक्रशनी समौ, बुधः शत्रुः। शुक्रसूर्यौ बुधस्य मित्रे, भौमगुरुशनयः समाः, चन्द्रः शत्रुः। रविचन्द्रभौमाः गुरोर्मित्राणि, शनिः समः, बुधशुक्रौ शत्रू। बुधशनी शुक्रस्य मित्रे, कुजगुरू समौ, रविचन्द्रौ शत्रू। सितज्ञौ शनेर्मित्रे, गुरुः समः, रवीन्दुभौमाः शत्रवः ॥ १० ॥

अब इस श्लोक से ग्रहों के मित्र, सम, शत्रु का विचार लिखते हैं:—

सूर्य के मित्र चन्द्रमा, मंगल और बृहस्पति हैं। चन्द्रमा के सूर्य और बुध हैं। मङ्गल के बृहस्पति, चन्द्रमा और सूर्य हैं। बुध के शुक्र और सूर्य हैं। बृहस्पति के सूर्य, चन्द्रमा और मङ्गल हैं। शुक्र के बुध और शनि हैं। और शनि के शुक्र, बुध मित्र हैं। इसी तरह सूर्य का बुध सम हैं और शुक्र शनि शत्रु हैं। चन्द्रमा के मङ्गल,

बृहस्पति, शुक्र और शनि सम हैं । मङ्गल के शुक्र, शनि सम हैं और बुध शत्रु है । बुध के मङ्गल, बृहस्पति और शनि सम हैं और चन्द्रमा शत्रु हैं । बृहस्पति के शनि सम हैं और बुध तथा शुक्र शत्रु हैं । शुक्र के मङ्गल तथा बृहस्पति सम हैं और सूर्य तथा चन्द्रमा शत्रु हैं । शनि के बृहस्पति सम हैं; सूर्य, चन्द्रमा और मंगल शत्रु हैं ॥ १० ॥

स्पष्टार्थ ग्रहमैत्री चक्रः—

| ग्रह | सूर्य | चन्द्रमा | मंगल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|---|
| मित्र | चंद्र, गुरु मंगल | रवि बुध | गुरु चंद्र सूर्य | शुक्र रवि | रवि, चं.मं. | बुध शनि | शुक्र बुध |
| सम | बुध | मंगल गुरु शुक्र. शनि | शुक्र शनि | मंगल गुरु शनि | शनि | मंगल गुरु | गुरु |
| शत्रु | शुक्र शनि | ०० | बुध | चन्द्र | बुध शुक्र | रवि चंद्र | रवि चन्द्र मंगल |

अथ दृष्टिं पृथ्वीवृत्तेनाह—

तृतीयदश मे ग्रहो नवपञ्चमेऽष्टाम्बुनी
क्रमाच्चरणवृद्धितः स्मरगृहं ततः पश्यति ।
कुजः सितबुधौ शशी रविबुधौ सितदमासुतौ
गुरुर्यमशनी गुरुर्भवनपा इमे मेषतः ॥ ११ ॥

अ०—क्रमात् ग्रहः तृतीयदशमे, नवमपञ्चमे, अष्टाम्बुनी स्मरगृहं चरणवृद्धितः पश्यति । तथा कुजः सितबुधौ, शशी रविबुधौ, सितचमासुतौ, गुरुर्यमशनी, गुरुः इमे ( ग्रहाः ) मेषतः भवनपाः भवन्ति ॥ ११ ॥

तृतीयेति—तृतीयदशमादिषु चरणवृद्धितः पश्यति तत्र तृतीयदशमे चरण-दृष्ट्या पश्यति, नवपञ्चमे द्विचरणदृष्ट्या पश्यति अष्टाम्बुनी अष्टमचतुर्थे चरणत्रय-दृष्ट्या पश्यति, स्मरगृहं सप्तमं चतुश्चरणदृष्ट्या पूर्णं पश्यतीत्यर्थः । तृतीयदशमे शनिः नवमपञ्चमे गुरुः, चतुर्थाष्टमे भौमः, पूर्णदृष्ट्या पश्यतीति जातकान्तरे सविशेषो ज्ञेयः । इमे कुजादयो मेषतो मेषमारभ्य भवनपाः राशीशाः, मेषस्य कुजः, वृषस्य शुक्रः, मिथुनस्य बुधः, कर्कस्य चन्द्रः, सिंहस्य रविरित्यादि ॥ ११ ॥

सभी ग्रह अपने स्थान से तृतीय, और दशम स्थान को एक चरण की दृष्टि से, नवम और पञ्चम स्थान को दो चरण की दृष्टि से, चौथे और आठवें स्थान को तीन चरण की दृष्टि से और सप्तम को चार चरण की (सम्पूर्ण) दृष्टि से देखते हैं। किन्तु शनि तीसरे तथा दशवें को, गुरु नवें और पांचवें को, मङ्गल चौथे, आठवें और सप्तम को भी पूर्णदृष्टिसे देखते हैं। (१) मङ्गल-शुक्र-बुध-चन्द्रमा-सूर्य-बुध-शुक्र-मङ्गल-गुरु-शनि-शनि और गुरु ये ग्रह क्रम से मेषादि राशियों के स्वामी होते हैं। जैसे मेष का मङ्गल, वृष का शुक्र, मिथुन का बुध इत्यादि ॥ ११ ॥

स्पष्टार्थ राशिस्वामीबोधक चक्रः—

| राशयः | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रहाः | मं. | शु. | बु. | चं. | सू. | बु. | शु. | मं. | बृ. | श. | श. | बृ. |

अध्यायं समापयति शालिन्या—

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन्।
सञ्ज्ञाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्दिग्भिः सँय्युतोऽयं प्रणीतः ॥ १२ ॥

इति जातकालङ्कारे प्रथमोऽध्यायः ॥ १ ॥

---

अ०—हृद्यैः पद्यैः गुम्फिते सूरितोषे मंजुले अलंकाराख्ये अस्मिन् जातके (जातकालङ्काराख्ये ग्रन्थे) श्रीगणेशेन वर्यैः दिग्भिः वृत्तैः (छन्दोभिः) संयुतः अयम् संज्ञाध्यायः प्रणीतः ॥ १२ ॥

हृद्यैरिति। श्रीगणेशेन विदुषा उत श्रीविशिष्टेन गणेशेन अलङ्काराख्ये अलङ्कारनामके मञ्जुले रुचिरे हृद्यैः पद्यैर्गुम्फिते मनोहरैः श्लोकै रचितेऽस्मिन् ग्रन्थे वर्यैः श्रेष्ठैः दिग्भिर्दशभिः वृत्तैः श्लोकैः अयमादिमः प्रथमः संज्ञाध्यायः प्रणीत उक्तः रचित इत्यर्थः ॥ १२ ॥

इति श्रीहरभानुविरचितायां जातकालङ्कारटीकायां संज्ञाध्यायः प्रथमः ॥ १ ॥

---

(१) भ्रात्रं त्रिकोणं चतुरस्रमस्तं पश्यन्ति खेटाश्चरणाभिवृद्ध्या।
मन्दो गुरुर्भूमिसुतः परे च क्रमेण सम्पूर्णदृशो भवन्ति ॥
अन्यच्च—पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः।
चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च ॥ स्पष्टार्थः।

उत्तम स्रग्धरा छन्दों से युक्त पण्डितों के सन्तुष्ट करने योग्य मनोहर और अलंकार से सुशोभित अलंकार नामक इस जातक ग्रन्थ में दश श्लोक से युक्त पण्डित श्रीगणेश दैवज्ञजीने इस संज्ञाध्याय नामक प्रथमाध्याय की पूर्ति की ॥ ११ ॥

इति जातकालङ्कारे भावबोधिनीभाषाटीकायां संज्ञाध्यायः प्रथमः ।

---

## अथ भावाध्यायः ॥ २ ॥

अथ भावाध्यायो व्याख्यायते । कविः स्वविनयं विशदयन् भावफलं वक्तुं पृथिवीवृत्तेन प्रतिजानीते—

शुकाननसरोरुहाद्गलितमत्र भूमीतले
फलं परमसुन्दरं सकलमाकलय्याधुना ।
ब्रवीमि तनुभावतः प्रवरदैववित्तोषदं
यदत्र मम चापलं किमपि तत्क्षमध्वं बुधाः ॥ १ ॥

अ०—शुकाननसरोरुहात् अत्र भूमीतले सकलं गलितम् प्रवरदैववित्तोषदं परमसुन्दरं फलं तनुभावतः अधुना आकलय्य ब्रवीमि । अत्र यत्किमपि मम चापलं तत् बुधाः क्षमध्वम् ॥ १ ॥

शुकेति । शुकाननसरोरुहाद्गलितमहं तनुभावतः तत आरभ्य तत्फलं जातकफलमधुना ब्रवीमि । हे बुधाः । पण्डिताः ! अत्र वचने मम किमपि चापलं स्यात्तद्यूयं क्षमध्वमिति प्रार्थना । किं कृत्वा ब्रवीमि—अत्र भूमीतले शुकाननसरोरुहात् शुकमुखारविन्दाद्गलितं शिष्यद्वारा प्राप्तं परमसुन्दरं सकलं फलमाकलय्य विचार्य, कथम्भूतं फलं प्रवरदैवविदां तोषदमुत्कृष्टज्योतिर्विदामानन्ददम्, अन्यत्रोक्तमन्यतो प्राह्यमिति न्यायेन प्रथमं ग्रहभावस्थता तेषां बलं च ज्ञातव्यं ततो भावसामान्यफलान्तरं शुभपापमित्रग्रहदृष्टियोगादिकं भावषड्वर्गभावेशस्योदयास्तादिकं ज्ञातव्यम् । तदुक्तं पृथुयशसा—

'यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः ।
पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या प्रश्नतो जन्मतो वा' ॥

तत्र विशेषो गर्गजातके—

'नीचस्थो रिपुगेहस्थो ग्रहो भावविनाशकृत् ।
उदासीनो ग्रहो मध्यो मित्रस्वर्क्षत्रिकोणगः ।
स्वोच्चस्थश्च ग्रहोऽप्येवं भाववृद्धिकरः स्मृतः ॥'

व्ययाष्टमषष्ठभावेषु विपरीतफलमाह उशानाचार्यः—

सौम्याः पुष्टिं पापा विपर्ययं संश्रिता ग्रहाः कुर्युः ।
मूर्त्यादिषु निधनान्त्यं रिपुभावे व्युत्क्रमात्फलदाः ॥

अन्यच्च—

सौम्यवर्गाश्रिता भावाः शुभतां प्राप्नुवन्ति हि ।
पापवर्गाधिका नेष्टास्तन्वाद्या नात्र संशयः ॥
लग्नलग्नाधिपौ स्यातां बलाधिकतरौ यदि ।
तत्फलानां प्रवृद्धिः स्याद्धीनो हानिकरः स्मृतः ॥
एवं भावेषु सर्वेषु भावभावेशयोर्बलात् ।
ततो जनुषि वक्तव्या हानिर्वृद्धिश्च कोविदैः ॥ इति ॥

सर्वार्थचिन्तामणौ—

लग्नादिभावाद्रिपुरन्ध्ररिःफे पापग्रहास्तद्भवनादिनाशः ।
सौम्यास्तु येषूक्तफलप्रदाः स्युस्तन्वादिकानां फलमेवमाहुः ॥
यद्भावनाथो रिपुरन्ध्ररिःफे दुःस्थानपो यद्भवनस्थितो वा ।
तद्भावनाशं कथयन्ति तज्ज्ञाः शुभेक्षिते तद्भवनस्य सौख्यम् ॥
तत्तद्भावात्त्रिकोणे स्वसुखमदनमे चास्पदे सौम्ययुक्ते
पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ।
भावानां पुष्टिमाहुस्त्वथ च शुभकरीमन्यथात्वे प्रणाशं
मिश्रं मिश्रैर्ग्रहेन्द्रैः सकलमपि तथा मूर्तिभावादिकानामिति ॥ १ ॥

इस वसुन्धरा पर श्रीशुकदेवजीके मुखारविन्दसे निकला हुआ अच्छे २ दैवज्ञों (ज्यौतिषियों) को सन्तुष्ट करनेवाला जो अत्यन्त सुन्दर फलादेश है उसको तनुभावके क्रमसे संग्रह करके लग्नादि द्वादश भावोंको कहता हूं। इसमें जो कुछ मेरी चपलता हो उसको विद्वज्जन क्षमा करें ॥ १ ॥

अथ त्रिभिः श्लोकैस्तनुभावविशेषमाह—

देहाधीशः सपापो व्ययरिपुमृतिगश्चेत्तदा देहसौख्यं
न स्याज्जन्तोर्निजर्क्षे व्ययरिपुमृतिपस्तत्फलस्यैव कर्ता ।
मूर्तौ चेत्क्रूरखेटस्तदनु तनुपतिः स्वीयवीर्येण हीनो
नानातङ्काकुलः स्याद् व्रजति हि मनुजो व्याधिमाधिप्रकोपम् ॥२॥

अ०—सपापः देहाधीशः व्ययरिपुमृतिगश्चेत् तदा जन्तोः देहसौख्यं न स्यात्। तथा व्ययरिपुमृतिपः निजर्क्षे (सति) तत्फलस्यैव कर्ता स्यात्। चेन्मूर्तौ क्रूरखेटस्त-

यदु तनुपतिः स्वीयवीर्येण हीनः (तदा) हि मनुजः नानातङ्काकुलः स्यात्, व्याधिमाधिप्रकोपम् व्रजति ॥ २ ॥

देहाधीश इति। देहाधीशो लग्नस्वामी सपापः पापग्रहेण युक्तः व्ययरिपुमृतिगः द्वादशषष्ठाष्टमान्यतमस्थानगतश्चेत्तदा जातस्य देहसौख्यं न स्यात्। अस्य योगस्य धनादिभावे विचार्यत्वद्योतनाय प्रथमसुक्तिरिति गम्यते 'यद्भावनाथो रिपुरन्ध्ररिःफे तद्भावनाशं कथयन्ति तज्ज्ञाः' इति प्राक् लिखितत्वात्। अन्यदाह—व्ययेशो व्यये षष्ठेशः षष्ठे अष्टमाधीशोऽष्टमे च तत्फलस्यैव कर्ता देहसौख्याभावकर्ता स्यात्। अयमर्थो यवनमतेन विरुद्धः। यथा बृहज्जातके—

रिपुभवनपे रिपुस्थे नीरुग्वैरी सुखी कृपणः।
निधनपतौ निधनस्थे व्यवसायी व्याधिवर्जितोऽप्युदितः॥

विरोधशमनाय अयमर्थो बोध्यः—देहाधीशे व्ययरिपुमृतिगे सति तद्भवनपेऽपि तत्रस्थे शुभफलं स्यादिति न वाच्यम्। पूर्वोक्तयोगे सति व्ययरिपुमृतिपः स्वभवनगतश्चेत्तत्फलस्यैव कर्तेति वाच्यम्। योगानामचिन्त्यफलत्वादिति। अथान्ययोगमाह—मूर्ताविति। मूर्तौ लग्ने क्रूरग्रहः क्रूरखेटः, तनुपतिः लग्नेशः स्वीयवीर्येण हीनः स्वकीयबलहीनश्चेत्तदा जातो मनुजः नानातङ्काकुलः अनेकरोगाकुलः व्याधिरोगमाधिप्रकोपं चिन्ताव्याप्तत्वं व्रजति प्राप्नोति बलहीनत्वं परपुंग्रहं नीचास्तत्वादिभिर्ज्ञेयम्, तदुक्तं जातकामृते—

स्वोच्चं मूलत्रिकोणं स्वगृहमधिसुहृद्गेहकं मित्रकं स्वा-
दौदासीन्यं समक्षं रिपुभमधिरिपोर्भञ्च नीचाभिधानम्।
पूर्वं पूर्वं बलीयः परमपरमिदं हीनसत्वं तदस्मात्—

इत्यादिवत्पद्धतिप्रकाशमतेन उत्तमबलत्वं च ज्ञेयम्, अल्पे बले हीनबल इति पद्धतिवचनात् ॥ २ ॥

जिसके जन्मसमयमें जन्मलग्नका स्वामी पापग्रह(१)से युक्त होकर बारहवें, छठें या आठवें स्थानमें हो तो उस मनुष्यको शरीरका सुख नहीं होता, एवं बारहवें, छठें या आठवें स्थानका स्वामी यदि अपने २ स्थानमें हो तथापि वही फल होता है—शरीर का सुख असंभव होता है। किंच यदि लग्न में पापग्रह हो और लग्नेश

---

(१) क्षीण चन्द्रमा, सूर्य, मंगल और शनि ये चारों पापग्रह हैं, तथा इनसे युक्त बुध भी पापग्रह होता है। उक्तञ्च—

"क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः" इति।

बलहीन हो तो मनुष्य अनेक तरहसे अत्यन्त चिन्तित होकर रोग और मानसिक पीड़ा से युक्त होता है ॥ २ ॥

अथ शुभयोगानाह—

अङ्गाधीशः स्वगेहे बुधगुरुकविभिः सँय्युतः केन्द्रगो वा
स्वोये तुङ्गे स्वमित्रे यदि शुभभवने वीक्षितः सत्स्वरूपः ।
स्यान्नूनं पुण्यशीलः सकलजनमतः सर्वसम्पन्निधानं
ज्ञानी मन्त्री च भूपः सुरुचिरनयनो मानवो मानवानाम् ॥३॥

अ०—अङ्गाधीशः स्वगेहे, बुधगुरुकविभिः संयुतः केन्द्रगः वा, स्वीये तुङ्गे स्वमित्रे, शुभभवने यदि (शुभग्रहैः) वीक्षितः तदा नूनं सत्स्वरूपः, पुण्यशीलः, सकलजनमतः, सर्वसम्पन्निधानं, ज्ञानी, मन्त्री, भूपः, सुरुचिरनयनः, मानवानां मानवश्च स्यात् ॥३॥

अङ्गाधीश इति । अङ्गाधीशः लग्ने चेदित्येको योगः । बुधगुरुकविभिर्युक्तो लग्नेशः केन्द्रग इति द्वितीयः । स्वीये तुङ्गे स्वोच्चे 'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः' इत्याद्युक्तेः । स्वमित्रे स्वमित्रगृहे अथवा शुभभवने शुभग्रहैर्वीक्षितो लग्नेश इति तृतीयः । एषामन्यतमयोगे जातो मानवो मानवानां मध्ये भूपादिकः स्यात् । भूपः भूपालो, मन्त्री अमात्यः, सर्वसम्पन्निधानं सर्वासां सम्पदामाश्रयः, ज्ञानी भूपत्वाद्युपयुक्तः ज्ञानवान् सत्स्वरूपः सत्वगुणानुरूपश्च पुण्यशीलः सुकृती सुरुचिरनयनः सुन्दरनयनादिशरीरः, सकलजनमतः सर्वजनमान्यः, पुण्यशीलशब्देन सत्यार्जवादि द्योत्यते तदुक्तं जातकरहस्ये—'यः सात्त्विकस्तस्य दयास्थिरत्वं सत्यार्जवब्राह्मणदेवभक्ति'रिति ॥ ३ ॥

लग्नेश लग्नमें हो या बुध, गुरु और शुक्रसे युक्त होकर केन्द्रमें हो, या अपने उच्चराशिमें या अपने मित्रके राशिमें अथवा शुभग्रहके राशिमें हो तथा शुभग्रहसे देखा जाता हो तो निश्चय ही वह मनुष्य सुन्दर शरीर वाला, पुण्यशील, सकलजनमान्य, सभी सम्पत्तियोंसे युक्त, ज्ञानवान्, राजमन्त्री, अथवा राजा तथा सुन्दर नेत्रवाला और मनुष्योंमें श्रेष्ठ होता है ॥ ३ ॥

अथारिष्टयोगत्रय श्लोकेनाह—

लग्ने क्रूरेऽथ याते खलखचरगृहं लग्ननाथे रवीन्दू-
क्रूरान्तःस्थानसंस्थावथ दिनपनिशानाथयार्द्यूनयायी ।
भूमीपुत्रस्तु पृष्ठादुदयमधिगतश्चन्द्रजश्चेन्मनस्वी
स्यादन्धो दुष्टकर्मा परभवनरतः पूरुषः क्षीणकायः ॥ ४ ॥

अ०—लग्ने क्रूरे, अथ लग्ननाथे खलखचरगृहं याते, रवीन्दू क्रूरान्तःस्थानसंस्थौ,

अथ दिनपनिशानाथयोर्द्यूनयायी भूमापुत्रश्चेच्चन्द्रजः पृष्ठादुदयमधिगतस्तदा पुरुषः मनस्वी, अन्धः, दुष्टकर्मा, परभवनरतः, क्षीणकायः स्यात् ॥ ४ ॥

लग्न इति । क्रूरे लग्ने क्रूरग्रहराशौ लग्नेशः स्थितः अयमेको योगः । पुष्पवन्तौ रवीन्दू क्रूरयोर्ग्रहयोर्मध्यस्थौ क्रूरमध्यस्थौ क्रूरमध्यस्थत्वं राश्यंशापेक्षया वा ज्ञेयम् । सङ्कोचे प्रमाणाभावात् अयं द्वितीयो योगः । अथ दिनपनिशानाथयोः सूर्याचन्द्रमसोः द्यूनयायी सप्तमगः भौमः, बुधः पृष्ठादुदयमधिगतः पृष्ठोदयराशौ स्थित इति तृतीयो योगः । अत्र जातः पुरुषः मनस्वी स्वच्छन्दमना इत्यर्थः । अन्धः दुष्टकर्मा परभवनरतः परगृहवासरतः, परस्त्रीरतो वा स्यात् । क्षीणशरीरश्च मनस्वित्वं कालगतचन्द्रस्य बलत्वे बोध्यम् । एवं तनुभावस्य शुभाशुभयोगा उक्ताः । ननु क्वचिच्छुभयोगेऽपि शुभफलं नोपलभ्यते तथा अशुभयोगेऽशुफलमिति तत्र को विशेष इति चेत्सत्यं क्रूरग्रहदृष्टयुतत्वादियोगेन अयं भावः । शुभयोगकारकग्रहोपरि क्रूरदृष्टौ सत्यां विनिश्चयाप्राप्तं फलं नोपलभ्यते, अशुभयोगकारकग्रहोपरि शुभदृष्ट्याऽशुभं नोपलभ्यते । ताजिककारैरित्थशालस्य दृष्टिप्रयुतमणऊयोगेन भजन्तं कृतमुक्तम् । बृहज्जातककारेण—'न शुभा उदिता योगा, याप्या भवन्ति शुभेक्षिता' इत्युक्तम् । इति तनुभावः ॥ ४ ॥

लग्नमें पापग्रह हो या लग्नेश पापग्रहके राशिमें हो या सूर्य और चन्द्रमा दोनों एक साथ पापग्रहके बीचमें हों या सूर्य या चन्द्रमासे सातवें स्थानमें मङ्गल हो और बुध पृष्ठोदय राशिमें हो, तो वह मनुष्य मनस्वी ( अपनी इच्छानुसार कार्य करने वाला ), अन्धा, दुष्टकर्म ( चोरी, निन्दा, व्यभिचार ) करने वाला, दूसरेकी स्त्रीमें रत रहने वाला और पतले शरीरवाला होता है ॥ ४ ॥

अथ धनभावफलं श्लोकद्वयेन ब्रुवन् प्रथमं धनयोगचतुष्टयमाह—

कोशाधीशः स्वराशौ सुरगुरुसहितः सर्वसम्पत्प्रदः स्यात्
केन्द्रे वाथ त्रिके चेद्भवति हि मनुजः क्लेशभाग्द्रव्यहीनः ।
स्वान्त्याधीशौ त्रिकस्थौ कवितनुपयुतौ स्यात्तदा नेत्रहीन-
श्चन्द्रः पापेन युक्तो धनभवनगतः शुक्रयुङ् नेत्रहीनः ॥ ५ ॥

अ०—कोशाधीशः, सुरगुरुसहितः स्वराशौ केन्द्रे वा ( स्थितो भवेत्तदा ) सर्वसम्पत्प्रदः स्यात् । अथ ( सुरगुरुसहितः कोशाधीशः ) त्रिके चेत्तदा मनुजः क्लेशभाक् द्रव्यहीनश्च भवति । स्वान्त्याधीशौ कवितनुपयुतौ त्रिकस्थौ ( स्यात् ) तदा नेत्रहीनः स्यात् । पापेन युक्तश्चन्द्रः धनभवनगतः शुक्रयुक् तदा नेत्रहीनः स्यात् ॥ ५ ॥

कोशाधीश इति । कोशाधीशो धनेशः गुरुयुतः स्वराशौ स्वे भावे केन्द्रे वा

चेत्तदा जातस्य सर्वसम्पत्प्रदः स्यात् । अथानन्तरमन्ययोग उच्यत इत्यर्थः, गुरुयुतो धनाधीशः त्रिकेषु षष्ठाष्टमद्वादशेषु अन्यतमे चेज्जातो मनुजः क्लेशभाक् द्रव्यहीनश्च स्यात्, सगुरुः धनाधीशः षष्ठे चेदयं योगः शिथिलो ज्ञेयः तं प्रति चाल्पधनयोग-सद्भावात् । धनाधीशस्य शुभत्वे मध्यधनयोगसद्भावात् । तदुक्तं बृहज्जातके—

लग्नादतीव वसुमान् वसुमान् शशाङ्कात्सौम्यग्रहैरुपचयोपगतैः समस्तैः ।
द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायामन्येष्वसत्स्वपि फलेष्विदमुत्कटेन ॥

अथान्ययोगः स्वांत्याधीशौ द्वितीयद्वादशाधीशौ शुक्रलग्नेशयुक्तौ चेत्तदा जातः नेत्रहीनः अन्धः स्यात् । अथान्ययोगः शुक्रपापाभ्यां युक्तश्चन्द्रो धनस्थश्चेत्तदा जातो नेत्रहीन इति ॥ ५ ॥

द्वितीय भावका स्वामी बृहस्पतिसे युक्त होकर अपनी राशिमें हो या केन्द्र (१।४।७।१०) में स्थित हो तो सभी सम्पत्तियोंको देनेवाला होता है। यदि द्वितीय भावका स्वामी बृहस्पतिसे युक्त होकर त्रिक (६।८।१२) स्थान में हो तो मनुष्य दुःख भोगने वाला और धनहीन होता है। एवं द्वितीयेश और द्वादशेश यदि शुक्र और लग्नेशसे युक्त होकर त्रिकमें हो तो मनुष्य नेत्रहीन (अन्धा) होता है। तथा चन्द्रमा पापग्रह और शुक्रसे युक्त होकर यदि धन भावमें हो, तो मनुष्य अन्धा होता है ॥ ५ ॥

अन्ययोगत्रयं तत्र द्वितीययोगस्य तातादिष्वतिदेशं चाह—

शुक्रः सेन्दुस्त्रिकस्थो जनुषि निशि नरः प्राप्नुयादन्धकत्वं
जन्मान्धः सार्कशुक्रस्तनुभवनपतिः स्यात्तदानीं मनुष्यः ।
एवं तातानुजाम्बासुतनिजगृहिणीस्थाननाथाः स्थिताश्चे-
दादेश्यं तत्र तेषां प्रवरमतियुतैरन्धकत्वं तदानीम् ॥ ६ ॥

अ०—सेन्दुः शुक्रः (यस्य) जनुषि त्रिकस्थः (सः) नरः निशि अन्धकत्वं प्राप्नुयात् । सार्कशुक्रस्तनुभवनपतिः (त्रिकस्थः) तदानीं मनुष्यः जन्मान्धः स्यात् । एवं तातानुजाम्बासुतनिजगृहिणीस्थाननाथाः (त्रिक) स्थिताश्चेत्तदानीं तत्र प्रवरमतियुतैः तेषाम् अन्धकत्वम् आदेश्यम् ॥ ६ ॥

शुक्र इति । जनुषि जन्मसमये सेन्दुः सचन्द्रः शुक्रस्त्रिकस्थः षष्ठाष्टमद्वादशेषु अन्यतमे चेत्तदा जातो मनुजः निशि अन्धकत्वं प्राप्नुयात् । सार्कशुक्रः सूर्यशुक्रयुतः तनुभवनपतिः लग्नेशः त्रिकस्थ इत्यनुषङ्गस्तदानीं जातो मनुजः जन्मान्धः जन्मनैवाऽन्धः स्यादिति । तातादीनां स्थाननाथाः एवं पूर्वोक्तप्रकारेण सार्केन्दुशुक्रास्त्रिकस्थाश्चेत्तदानीं तेषां तातादीनामन्धकत्वं प्रवरमतियुतैरादेश्यं वक्तव्यम् । तत्र तातः

पिता, अनुजः कनिष्ठभ्राता, अम्बा माता, निजगृहिणी भार्या, प्रवरमतिशब्देन तातादीनां जन्मन्यपि अन्धयोगज्ञानत्व सूच्यते । इति घनभावः ॥ ६ ॥

जिसके जन्मकालमें चन्द्रमाके सहित शुक्र त्रिक (६, ८ या १२) स्थान में हो तो वह मनुष्य रातको अन्धा होता है, याने उसको रतौंधी होती है एवं सूर्य और शुक्रके सहित लग्नेश यदि त्रिकमें हो तो वह मनुष्य जन्मान्ध होता है। इसीतरह तात (दशम), अनुज (तीसरा), अम्बा (चौथा), सुत (पाचवां) और निज गृहिणी (सातवा) स्थानका स्वामी सूर्य, शुक्र और चन्द्रमासे युक्त होकर यदि त्रिक में हो तो क्रमसे पिता, माता, भाई, पुत्र, और स्त्री को अन्धे होनेका योग होता है, ऐसा आदेश विद्वानोंको करना चाहिये ॥ ६ ॥

अथ भ्रातृसम्भवतत्सुखादियोगानाह—

भ्रातृस्थानेशभौमौ व्ययरिपुनिधनस्थानगौ बन्धुहीनः
स्वक्षेत्रे सौम्यदृष्टे सहजभवनपे मानवः स्याच्च तद्वान् ।
केन्द्रस्थे बन्धुसौख्यं शुभविहगयुते स्याददभ्रं नराणां
पापैश्चेदन्यथैतत्तदनु निजधिया ज्ञेयमित्थं समस्तम् ॥ ७ ॥

अ०—भ्रातृस्थानेशभौमौ व्ययरिपुनिधनस्थानगौ (तदा) बन्धुहीनः स्यात्। सहजभवनपे स्वक्षेत्रे सौम्यदृष्टे (तदा) मानवः तद्वान् (भ्रातृमान्) स्यात्। (सहजभवनपे) केन्द्रस्थे शुभविहगयुते (सति) नराणां अदभ्रं बन्धुसौख्यं, (स्यात्), तदनु पापैः युते चेत् तदैतदन्यथा स्यात्। इत्थं निजधिया समस्तं ज्ञेयम् ॥ ७ ॥

भ्रात्रिति । भ्रातृस्थानेशभौमौ तृतीयाधिपतिभौमौ व्ययरिपुनिधनस्थानगौ (१२।६।८) त्रिकस्थौ यदि तदा जातः बन्धुहीनः सामान्यशब्दनिर्देशेन सहोदरबन्धवो विवक्षितास्तै रहित इत्यर्थः । सहजभवनपे सहजाधिपे स्वक्षेत्रे स्वगृहे सौम्यदृष्टे शुभग्रहदृष्टे सति मानवः तद्वान्बन्धुमान् स्यात् । सहजाधिपे शुभग्रहयुते । केन्द्रस्थे अदभ्रं बहुबन्धुसौख्यं स्यात् । केन्द्रस्थे सहजभवनपे पापग्रहैर्युते चेदन्यथा बन्धुसौख्यं न स्यात् । युते दृष्टे इत्युपलक्षणम् । इत्थमनुना प्रकारेण बुद्धिमद्भिर्निजधिया स्वबुद्धया समस्तं भावफलं तदनु योगविचारानन्तरं ज्ञेयम् । अयमर्थः । योगे सत्यपि योगकर्तृषु भूयसी पापदृष्टिः पापयोगः, योगकर्तॄणां नीचास्ततो योगे प्रागुक्तं लक्षणं न स्यात् इति भावः ॥ ७ ॥

तृतीयेश और मङ्गल बारहवें छठें या आठवें स्थानमें हों तो मनुष्य भाईसे हीन होता है तथा तृतीयेश अपने राशिमें हो और शुभग्रहसे युक्त हो तो भाईवाला होता है । एवं तृतीयेश केन्द्रस्थानमें शुभग्रहके सहित हो तो निरन्तर भाईके सुखसे युक्त

रहता है और यदि पापग्रहसे युक्त तृतीयेश हो तो उक्त फलका विपरीत अर्थात् भाई का सुख नहीं होता है। इसी तरह अपनी बुद्धिके अनुसार सर्वत्र कहना चाहिये ॥ ७ ॥

अथ चतुर्थभावफल वदन् योगचतुष्टयमाह

पातालेशः स्वराशौ शुभखचरयुतो भाग्यनाथेन युक्तः
सामन्तः स्यात्ततश्चेत्सुरपतिगुरुणा वाहनेशस्तनुस्थः।
सन्दृष्टो राजपूज्यस्तदनु च हिबुकाधीश्वरो लाभसंस्थो
यानं पश्यन्नराणां निवहमभिमतं वाहनानां प्रदत्ते ॥ ८ ॥

अन्वयः—पातालेशः स्वराशौ शुभखचरयुतः भाग्यनाथेन युक्तः चेत् (तदा) सामन्तः स्यात्। ततः तनुस्थः वाहनेशः सुरपतिगुरुणा संदृष्टः (चेत्) राजपूज्यः (स्यात्)। तदनु च हिबुकाधीश्वरः लाभसंस्थः (वा) यानं पश्यन् नराणां वाहनानाम् अभिमतं निवहं प्रदत्ते ॥ ८ ॥

पातालेश इति। पातालेशश्चतुर्थेशः स्वराशौ शुभखचरयुतः शुभग्रहयुक्तः सन् भाग्यपेन भाग्यस्वामिना युक्तश्चेज्जातः सामन्तः माण्डलिकः स्यात्। ततो योगानन्तरं लग्नस्थः वाहनेशो गुरुणा पूर्णदृष्ट्या दृष्टश्चेत्तदा जातो राजपूज्यः राजकृतसन्मानभाजनं स्यात्। तदनु गुरुदृष्टः सुखेशः लाभगश्चेत्, यद्वा गुरुदृष्टः सुखेशः यानं पश्यन्भवति तदा वाहनानां निवहं समूहं नराणामभिमतं ददाति। इदं योगद्वयं वा शब्दप्रयोजकेऽपि ज्ञेयमन्ययोगलाभाच्चतुर्थदृष्टिविरहात् योगप्रमाणप्रपञ्चात् ॥ ८ ॥

चतुर्थेश अपने राशिमें शुभग्रहोंसे और भाग्य (नवम) नाथसे युक्त हो तो मनुष्य सामन्त (मण्डलेश्वर) होता है और लग्नमें स्थित होकर चतुर्थेश बृहस्पतिसे देखा जाता हो तो मनुष्य राजमान्य (राज-पुरुष) होता है और बृहस्पतिके दृष्टिसे युक्त होकर चतुर्थेश ग्यारहवेंमें हो या बृहस्पतिसे दृष्ट होकर चतुर्थेश चतुर्थभाव को देखता हो तो इच्छानुसार वाहनोंके समूहोंको देने वाला होता है ॥ ८ ॥

अथ गृहप्राप्त्यादियोगानाह—

स्वक्षेत्रे तुर्यनाथस्तनुपतिसहितः स्यादकस्माद्गृहाप्तिः
सौहार्दं वा सुहृद्भिस्तदितरगृहगश्चेद् गृहाऽलभ्ययोगः।
यावन्तः पापखेटा धनदशमगृहप्रान्त्यपैश्चेत्त्रिकस्था
य[illegible]स्तावत्प्रमाणा ज्वलनवशगताः क्लेशदाः स्युर्गृहा नुः ॥ ९ ॥

अ०—तनुपतिसहितः तुर्यनाथः स्वक्षेत्रे (स्यात् तदा) अकस्माद् गृहाप्तिः वा सुहृद्भिः सौहार्दं स्यात्। तदितरगृहगश्चेत् (तदा) गृहालभ्ययोगः (स्यात्)। यावन्तः पापखेटाः [illegible] नुः ज्वलनवशगताः गृहाः क्लेशदाः स्युः ॥ ९ ॥

स्वक्षेत्र इति। लग्नेशसहितश्चतुर्थभावनाथः स्वक्षेत्रे चतुर्थभवने चेत्तदा जातस्य अकस्मादयत्नतो गृहाप्तिः गृहलाभः स्यात्। तथा सुहृद्भिर्हितकारकैर्जनैः सौहार्दं प्रीतिः सुहृज्जनयुक्तं गृहादिः स्यादित्यर्थः। तनुपतियुक्तः चतुर्थनाथः तदितरगृहगः चतुर्थभवनादन्यभवनस्थश्चेत्तदा गृहालभ्ययोगः गृहप्राप्त्यभावः। यावन्तः क्रूरग्रहाः द्वितीयदशमचतुर्थद्वादशनाथैः सहितास्त्रिकस्थाः तावन्तो गृहाः जातस्य नुः नरस्य वह्निवशगता दग्धाः अत एव क्लेशदाः स्युः। अत्र धनेशादीनां चतुर्णां समुदितानामेकयोगो न विवक्षितः। त्रिकभवने यो वा प्राप्त्यसद्भावे सावकाशत्वात्॥ ९॥

यदि लग्नेशके सहित चतुर्थेश अपने राशिमें हो तो अकस्मात् (विना प्रयासेन) घरकी प्राप्ति और सज्जनोंसे मैत्री होती है, किन्तु इससे अन्यत्र रहने पर गृह प्राप्तिका योग नहीं होता है। तथा जितने पापग्रह दूसरे दशवें और बारहवें स्थानके स्वामीसे युक्त होकर त्रिक (६।८।१२) में रहते हैं उतने ही संख्यक गृह अग्निसे जल जाते हैं और उससे वह मनुष्य अत्यन्त कष्ट पाता है॥ ९॥

अथ वाहनविरामयोगं तच्छान्तिकरणं चाह—

यावन्तो वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयु-
स्तावन्तो वा विरामाः परमगुणवतां वाहनानां नृणां स्युः।
क्रूराः पश्यन्ति यानं व्ययनिधनगताश्चेत्तदा तद्वदेव
प्राज्ञैरादेश्यमेषां खलु शुभकरणं शान्तिकं वाहनानाम्॥ १०॥

अ०—यावन्तः (पापखेटाः) वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयुः, तावन्तो नृणां परमगुणवतां वाहनानां विरामाः स्युः। वा व्ययनिधनगताः क्रूराः यानं पश्यन्ति चेत्तदा तद्वदेव फलं स्यात्। प्राज्ञः एषां वाहनानां खलु शुभकरणं शान्तिकम् आदेश्यम्॥ १०॥

यावन्त इति। क्रूरा इत्यनुषङ्गः यावन्तः वाहनस्थाः शुभविहगदृशां गोचरा नो भवेयुः शुभग्रहदृष्टा न स्युः तावन्तो नृणां परमगुणवतां प्रकृष्टगुणयुक्तानां वाहनानां विरामाः विनाशाः स्युः। अथ द्वादशाष्टमगताः क्रूरा यावन्त इत्यनुषङ्गश्चतुर्थं पश्यन्ति चेत्तदा पण्डितैस्तद्वदेव दृष्टक्रूरग्रहे संख्याप्राप्ते स्ववाहनानां विरामाः स्युरिति ज्ञेयम्। तत्र वाहनानां शुभकरणं शान्तिकं प्राज्ञैरादेश्यं विधेयमिति शेषः। इति चतुर्थभावः॥ १०॥

जन्मकालमें जिस मनुष्यके शुभग्रहकी दृष्टिसे वर्जित जितने पापग्रह चतुर्थ स्थानमें हों उस मनुष्यके उतने ही संख्यक अच्छे २ वाहनोंका नाश होता है। इसी तरह जितने पापग्रह बारहवें और आठवें भावमें स्थित होकर चतुर्थ भावको देखते हों उतने

ही अच्छे २ वाहनोंका नाश होता है। अतः उक्त योग प्राप्त होनेसे समयानुसार वाहनोंकी शुभकारक शान्ति करने का आदेश बुद्धिमानों को देना चाहिये ॥ १० ॥

अथ पञ्चमभावफलं विवक्षुर्निरुपायेन विद्याबुद्धियोगानाह—

विद्यास्थानाधिपो वा बुधगुरुसहितश्चेत्त्रिके वर्तमानो
विद्याहीनो नरः स्यादथ नवमनिजक्षेत्रकेन्द्रेषु तद्वान्।
बालत्वं वृद्धता वा यदि गगनसदां जन्मकाले तदा स्या-
त्प्रज्ञामान्द्यं नराणामथ यदि विहगः स्वर्क्षगो दोषहृत्स्यात् ॥११॥

अ०—विद्यास्थानाधिपो, वा बुधगुरुसहितः ( विद्यास्थानाधिपः ) त्रिके वर्तमानो नरः विद्याहीनः स्यात्। अथ नवमनिजक्षेत्रकेन्द्रेषु ( विद्यास्थानाधिपः ) चेत्तदा तद्वान् भवति। यदि जन्मकाले गगनसदां बालत्वं वृद्धता वा तदा नराणां प्रज्ञामान्द्यं स्यात्। अथ यदि विहगः स्वर्क्षगः ( स्थितश्चेत्तदा ) दोषहृत् स्यात् ॥ ११ ॥

विद्येति। विद्यास्थानाधिपः पञ्चमेशः केवलो बुधगुरुसहितो वा त्रिके वर्तमानश्चेत्तदा जातो विद्याहीनः। त्रिकस्थे पञ्चमेशे बुधगुरुयोगे विद्यायनुकूलो नास्तीति 'वा'शब्देन द्योतितम्। अथ पञ्चमेशः पञ्चमनवमकेन्द्रेषु स्थितश्चेत्तदा जातो विद्यावान्। बुधगुरुयोगे विद्यावत्वं किन्तु वक्तव्यमिति गम्यते। अथ जन्मकाले प्रज्ञायोगकर्तॄणां गगनसदां ग्रहाणां बालत्वं वृद्धता वा यदि तदा जातानां प्रज्ञामान्द्यमल्पबुद्धिः स्यात्। यदि बालो वृद्धो वा ग्रहः स्वक्षेत्रगः तदा दोषहृत्प्रज्ञामान्द्यस्यप्रयोजकदोषं दूरीकुर्यादित्यर्थः ॥ ११ ॥

विद्यास्थानका स्वामी अकेला या बुध और गुरुके सहित होकर त्रिक ( ६।८।१२ ) स्थानमें हो तो जातक विद्यासे हीन ( मूर्ख ) होता है और यदि विद्यास्थानका स्वामी स्वयं वा बुध तथा गुरुके सहित होकर अपने राशिमें हो या नवम स्थानमें या केन्द्रमें हो तो जातक विद्वान् होता है। एवं जन्मलग्नमें पञ्चमेश बाल्य या वृद्ध हो तो जातककी बुद्धि मन्द होती है और यदि बाल या वृद्ध होते हुये भी पञ्चमेश अपने राशिमें हो तो दोष ( मन्द बुद्धिरूप दोष ) को नाश करने वाला होता है ॥ ११ ॥

अथ मूकत्वसन्तानाभावयोगानाह—

वाक्स्थानेशो गुरुर्वा व्ययरिपुविलयस्थानगो वाग्विहीन-
श्चैवं पित्रादिकानां पतय इह युता मूकता स्याच्च ताभ्याम्।
वागीशात्पञ्चमेशस्त्रिकभवनगतः पुत्रधर्माङ्गनाथा
रन्ध्रद्वेष्यान्तिमस्था यदि जनुषि नृणामात्मजानामभावः ॥१२॥



अ०—वाक्स्थानेशो, वा गुरुः व्ययरिपुविलयस्थानगः (चेत्तदा) वाग्विहीनः स्यात्।

एवं च पित्रादिकानां पतयः ताभ्यां युताः चेत्तदा तेषां ( पित्रादिकानाम् ) इह मूकता स्यात्। यदि अनुपि वागीशात्पञ्चमेशः त्रिकभवनगतः तथा पुत्रधर्माङ्गनाथाः लग्नाद्-व्यान्तिमस्थाः ( तदा ) नृणाम् आत्मजानाम् अभावः स्यात् ॥ १२ ॥

वाक्स्थान इति। पञ्चमेशो, गुरुर्वा व्ययरिपुविलयस्थानगस्त्रिकस्थश्चेत्तदा वाग्विहीनः मूकः स्यात्। अथ पित्रादिमूकतायोगमाह—एवं प्रकारेण पित्रादिभा-वानां दशमभावादिराशीनां पतयस्ताभ्यां पञ्चमेशगुरुभ्यां युतास्त्रिके तिष्ठन्ति चेत्तदा तातादीनां मूकत्वं स्यात्। आदिशब्दात् अनुजाद्यो ज्ञेयाः। अथ जन्मनि जीवात् जीवाधिष्ठितराशेः पञ्चमेशः त्रिकस्थः पुत्रधर्माङ्गनाथाः पञ्चमनवमलग्नेशाः जन्मल-ग्नात्त्रिकस्थाः यदि तदा पुत्राणामभावो वाच्यः ॥ १२ ॥

पञ्चमेश या बृहस्पति बारहवें छठें या आठवें स्थान में हों तो जातक वाणीसे हीन (गूंगा) होता है। एवं पितृ, बन्धु, भ्रातृ, स्त्री आदिके भावों के स्वामी बृहस्पतिके साथ यदि छठे, आठवें या बारहवें स्थानमें हों तो जातक के पिता, बन्धु, भाई, और स्त्री आदि वाणी से हीन ( गूंगे ) होते हैं। और बृहस्पति जिस राशिमें हो उससे पांचवें स्थान-का स्वामी यदि छठे आठवें बारहवें स्थानमें हो और लग्नेश पञ्चमेश तथा नवमेश आठवें छठें और बारहवें स्थानमें हों तो जातकको पुत्रोंका अभाव होता है ॥ १२ ॥

अथ सन्तानयोगमाह—

किञ्चित्कालं विलम्बः शुभखगसहितास्तेऽथ कर्के सुतर्क्षे
चन्द्रे कन्याप्रजावान्प्रमिततनयवांश्चाथ देवेन्द्रपूज्यात्।
क्रूरश्चेत् पञ्चमस्थो गुरुरपि सुतगः स्यात्तदाऽपत्यहीन-
श्छायापुत्रः स्वगेहाद्यदि भवति सुते सूनुरेकस्तदानीम् ॥ १३ ॥

स०—ते ( पुत्रधर्माङ्गनाथाः ) 'यदि' शुभखगसहिताः 'स्युस्तदा' किञ्चित् कालं विलम्बः 'स्यात्'। अथ चन्द्रे कर्के सुतर्क्षे 'सति' कन्याप्रजावान् प्रमिततनयवांश्च 'भवेत्'। अथ देवेन्द्रपूज्यात् पञ्चमस्थः क्रूरः 'भवेत्' गुरुः अपि सुतगः 'भवेत् तदा' अपत्यहीनः स्यात्। यदि छायापुत्रः स्वगेहात् सुते 'भवेत्' तदानीं एकः सूनुः भवति ॥ १३ ॥

किञ्चित्कालमिति। ते पुत्रधर्माङ्गनाथाः शुभखगसहिताश्चेत्तदा सन्तानो-त्पत्तौ किञ्चित्कालं विलम्बः स्यात्। शुभग्रहदशान्तर्दशाबलापेक्षया विलम्ब इति भावः। अथ कर्कराशौ पञ्चमभावे चन्द्रश्चेत्तदा कन्याप्रजावान् अथवा प्रमिततन-यवान् स्वल्पापत्यः स्यात्। अथ देवेन्द्रपूज्यात् जीवात्पञ्चमस्थः क्रूरश्चेत् जीवोऽपि लग्नात्पञ्चमगस्तदापत्यहीनः सन्तानरहितः स्यात्। यदि स्वगेहात्स्वराशितः पञ्चमे छायापुत्रः शनिश्चेत्तदा एकपुत्रः स्यात्। अथ सम्पूर्णाङ्कता शुभकृतम् ग्रहे: स्वराशेः

पुत्रभवने दृष्टयैकपुत्रयोगस्तदा रविभौमयोः स्वगृहात्पञ्चमस्थयोरेकपुत्रत्वं किमुत वक्तव्यमिति गूढोऽभिप्रायः ॥ १३ ॥

वे ( लग्नेश, पञ्चमेश और नवमेश ) यदि शुभग्रहों से युक्त हों तो सन्तान होने में कुछ ही देर होती है। यदि चन्द्रमा कर्कराशि का पाँचवें भाव में हो तो कन्या सन्तान अथवा थोड़ी सन्तान होती है। इसमें पुत्र की सङ्ख्या कम होती है। यदि बृहस्पति से ५ वें स्थान में कोई पाप ग्रह हो बृहस्पति स्वयं भी लग्न से ५ वें भावमें हो तो सन्तान नहीं होती। यदि शनि अपनी राशि ( १०।११ ) से ९ व स्थान में बैठा हो तो एक पुत्र होता है ॥ १३ ॥

अथ अन्ययोगानाह—

कुम्भे चेत्पञ्च पुत्रास्तदनु च मकरे नन्दनेऽप्यात्मजाः स्यु-
स्तिस्रो भौमः सुतानां त्रितयमथ सुतादायको रौहिणेयः।
इत्थं काव्यः शशाङ्को जनुषि च गुरुणा केवलेनैव पुत्राः
पञ्च स्युः केतुराह्वोः क्रियवृषभवने कर्कटे नो विलम्बः ॥ १४ ॥

अन्वयः—चेत् पञ्चमे कुम्भे नन्दने ( सति ) पञ्चपुत्राः, तदनु च मकरे ( चेद् ) तिस्र आत्मजाः स्युः। तत्र भौमश्चेत्' नन्दने मकरे तदा सुतानां त्रितय 'स्यात्'। रौहिणेयः काव्यः शशाङ्कः इत्थं जनुषि ( पञ्चमे ) सुतादायकः स्यात्। केवलेनैव गुरुणा पञ्च पुत्राः स्युः। क्रियवृषभवने कर्कटे ( तत्र ) केतुराह्वोः नो विलम्बः 'भवति' ॥ १४ ॥

कुम्भ इति। नन्दने पञ्चमभावे कुम्भे छायासूनुरित्यनुषङ्गः, यदि तदा पञ्च पुत्राः स्युः। मकरे आत्मजाः तिस्रः मकरस्य स्त्रीराशित्वादिति भावः। भौमे मकरे चेदित्यनुषङ्गः सुतानां त्रितयं प्रथं स्यात्। अथ रौहिणेयः बुधः पञ्चमे सुतादायकः कन्याप्रदः। इत्थं शुक्रश्चन्द्रोऽपि पञ्चमे सुतादायकः। एवं केवलेन ग्रहयोगरहितेन पञ्चमस्थेन गुरुणा पञ्च पुत्राः स्युः। पञ्चमे मेषे वृषे कर्के वा केतुराह्वोरेकतरे सति नो विलम्बः सन्तानोत्पत्तौ प्रतिबन्धो न भवतीत्यर्थः। नो विलम्ब इत्यनेन सूचितं मकरकुम्भातिरिक्तराशौ पञ्चमे शनौ मकरमन्तरेण तत्रस्थे भौमे, क्रियादिराशीन्विहाय पञ्चमे राहौ वा केतौ सन्ततेर्विलम्ब एवेति भावः ॥ १४ ॥

यदि जन्मकाल में पञ्चम स्थान में शनि कुम्भ राशिका हो तो पांच पुत्र होते हैं। मकर राशि यदि शनि से युक्त पंचम भाव में हो तो तीन कन्यायें होती हैं और यदि पंचम स्थान में मकर राशि मंगल से युक्त हो तो तीन पुत्र होते हैं। पञ्चम स्थान में बुध शुक्र या चन्द्रमा हो तो कन्याप्रद होता है। केवल बृहस्पति हो तो पांच पुत्र होते

हैं। पञ्चम स्थान में यदि मेष, वृष, या कर्क राशि हो और राहु या केतु से युक्त हो तो सन्तान में विलम्ब नहीं होता, अर्थात् शीघ्र सन्तान होती है ॥ १४ ॥

ननु कति वर्षाणि विलम्ब इत्याह—

पापो वा वासवेज्यः सुखभवनगतः पञ्चमे वाऽष्टमे वा
शीतांशुः सन्ततेःस्यात्खगुणमितसमातुल्य एव प्रबन्धः ।
यावन्तः पापखेटास्तनयगृहगताः सौम्यदृष्टचा वियुक्ता-
स्तावद्व र्षप्रमाणो नियतमिह भवेत्सन्ततेर्वा विलम्बः ॥ १५ ॥

अ०—पापो वा वासवेज्यः सुखभवनगतः शीतांशुः पञ्चमेऽष्टमे वा स्यात्तदा सन्ततेः खगुणमितसमातुल्यं एव प्रबन्धः । अथवा यावन्तः पापखेटाः तनयगृहगताः सौम्यदृष्ट्या वियुक्तास्तावद्वर्षप्रमाणः इह नियतं सन्ततेर्विलम्बः भवति ॥ १५ ॥

पापो वेति । पा ग्रहो जीवो वा चतुर्थस्थः पञ्चमेऽष्टमे वा चन्द्रो भवति तर्हि खगुणमितसमातुल्यः त्रिंशद्वर्षमितप्रबन्धः सन्ततेरित्यनुषङ्गः प्रकृष्टो बन्धः । शुभग्रहदृष्ट्या वियुक्ताः यावन्तः पञ्चमस्थाः क्रूरग्रहाः स्युः 'बलाधीनफलाः खगा" इत्युक्तप्रकारैः स्थानदिगादिवलरूपकैः किं तदिति चेत् यं तावद्वर्षप्रमाणं सन्ततेर्निश्चयेन विलम्बः स्यादित्यर्थः ॥ १५ ॥

जन्मलग्न से चतुर्थ स्थान में पापग्रह या बृहस्पति हो और चन्द्रमा पंचम या अष्टम स्थान में हो तो ३० वर्ष सन्तान होने में विलम्ब होता है। और जितने पापग्रह पंचम भाव में शुभ ग्रह की दृष्टि से रहित होकर हों उतने संख्यक वर्ष निश्चित कर के सन्तान होने में विलम्ब होता है ॥ १५ ॥

तत्प्राप्तिर्धर्ममूला तदनु बुधकवी शङ्करस्याभिषेका-
च्चन्द्रश्चेत्तद्वदेव त्रिदिवपतिगुरुर्मन्त्रयन्त्रौषधीनाम् ।
सिद्धचा मन्दारसूर्या यदि शिखितमसी तत्र वंशेशपूजा
कार्याऽऽम्नायोक्तरीत्या बुधगुरुनवपाः क्षिप्रमेवात्र सिद्धिः ॥१६॥

अ०—तत्प्राप्तिः धर्ममूला, तदनु बुधकवी ( प्रतिबन्धकौ चेत् ) शंकरस्याभिषेकात्, चन्द्रश्चेत्तद्वदेव, त्रिदिवपतिगुरुर्मन्त्रयन्त्रौषधीनां सिद्धया, यदि मन्दारसूर्याः शिखितमसी ( प्रतिबन्धकाः ) तत्र आम्नायोक्तरीत्या वंशेशपूजा कार्या । बुधगुरुनवपाः क्षिप्रमेवात्र सिद्धिः 'स्यात्' ॥ १६ ॥

तत्प्राप्तिरिति । तत्प्राप्तिः सन्ततिप्राप्तिर्धर्ममूला श्रुतिस्मृतिविहितो धर्मः मूलं हेतुर्यस्याः सा तथा आदित्यसप्तमीव्रतशङ्कराराधनसन्तानगोपालमन्त्रजपहरिवंशश्रवणादिविहितधर्ममूलेति भावः । अत्र विशेषः । तदनु तत्पश्चाद् बुधकवी यदि-

मन्त्रप्रयोधकौ चेत् शङ्करस्याभिषेकाद्रुद्राध्यायोक्तमन्त्रकरणाभिषेकात्तत्प्राप्तिरित्यनुषङ्गः । चन्द्रश्चेत्पूर्ववज्ज्ञेयम् । गुरुश्चेत्तथा यदा तदा मन्त्रयन्त्रौषधीनां सिद्ध्या । सिद्धिशब्दो मन्त्रादिभिः प्रत्येकं चन्द्रश्चेत्पूर्ववज्ज्ञेयम्, सम्बध्यते । मन्त्रसिद्ध्या औषधी-सिद्ध्येति । मन्त्राचरणेन सन्तानगोपालमृत्युञ्जयादयो मन्त्रास्तदनुष्ठानेन, यन्त्राणि यन्त्रग्रन्थोक्तानि तेषां सिद्ध्या, ओषध्यो लक्ष्मणाद्यास्तासां सिद्धिः विधिवदनुष्ठानसा-ध्यफलेत्यर्थः । शनिभौमसूर्यराहूणां मध्ये कस्यचित्प्रतिबन्धकत्वं तत्र वंशेशपूजा कुलदेवतापूजनम्, आम्नायोक्तरीत्या कार्या । आम्नायशब्दोऽत्र वेदस्मृतिपुराणा-द्युपलक्षणार्थः । तत्रापि विशेषः—बुधगुरुनवमस्थानपाः प्रतिबन्धकाश्चेदुमानुष्ठानात् क्षिप्रमेव सिद्धिः स्यादिति । इति पञ्चमभावः ॥ १६ ॥

संतान की प्राप्ति धर्माचरण से होती है । जैसे बुध और शुक्र प्रतिबन्धक हों तो शंकरजी का अभिषेक कराने से, चन्द्रमा प्रतिबन्धक हो तो भी शंकरजी के अभि-षेक से पुत्र की प्राप्ति होती है । बृहस्पति प्रतिबन्धक हो तो यन्त्र मन्त्र और औषधी की सिद्धि के द्वारा सन्तानकी प्राप्ति होती है । शनि या मंगल अथवा राहु या केतु प्रतिबन्धक हो तो वेद विधि से अपने वंशेश ( कुलदेवता ) की पूजा करने से सन्तान की प्राप्ति होती है । बुध गुरु या नवमेश प्रतिबन्धक हो तो पार्वती के अनुष्ठान से शीघ्र कार्य की सिद्धि होती है ॥ १६ ॥

अथ रिपुभावफलं वक्तुकामस्तावद्व्रणरोगानाह—

षष्ठेशे पापयुक्ते तनुनिधनगते नुः शरीरे व्रणाः स्यु-
श्चादेश्यं तज्जनित्रीजनकसुतवधूबन्धुमित्रादिकानाम् ।
इत्थं तत्स्थानगामी शिरसि दिनमणिश्चानने शीतभानुः
कण्ठे भूमीतनूजो हृदि शशितनयो वाक्पतिर्नाभिमूले ॥ १७ ॥

अ०—षष्ठेशे पापयुक्ते तनुनिधनगते नुः शरीरे व्रणाः स्युः । इत्थं तज्जनित्री-जनक-सुत-वधू-बन्धु-मित्रादिकानां ( व्रणादिफलं ) आदेश्यम् । तत्स्थानगामी दिनमणिश्चेत् तदा शिरसि, शीतभानुश्चेत् आनने, भूमीतनूजश्चेत् कण्ठे, शशितनय-श्चेत् हृदि, वाक्पतिश्चेन्नाभिमूले व्रणाः स्युः ॥ १७ ॥

षष्ठेश इति । पापग्रहयुते षष्ठेशे लग्नाष्टमगते सति नुः मनुजस्य शरीरे व्रणाः स्युः । इत्थमुक्तप्रकारेण जनित्र्यादिभावानामीशे पापयुते तनुनिधनगते तेषां व्रणाः स्युरित्यादेश्यं वक्तव्यम् । अथ विशेषव्रणनाह—तत्स्थानगामी तनुनिधनगतः षष्ठेशो दिनमणिः सूर्यश्चेत् शिरसि व्रणः, चन्द्रश्चेन्मुखे, भौमश्चेत्कण्ठे, बुधश्चेद् हृदये, वाक्पतिश्चेन्नाभिमूले व्रणाः स्युः ॥ १७ ॥

षष्ठेश पापग्रह से युक्त होकर लग्नमें या अष्टममें हो तो जातकके शरीरमें व्रण (घाव फोड़ा फुन्सी) होता है। इसी तरह मातृ, पितृ, सुत, बन्धु, स्त्री और मित्र स्थानके स्वामी यदि पापग्रहसे युक्त होकर लग्नमें या आठवेंमें हों तो माता, पिता, पुत्र और स्त्री आदिके शरीरमें व्रण कहना चाहिये। यदि लग्न या अष्टममें षष्ठेश सूर्य हो तो शिरमें, षष्ठेश चन्द्रमा हो तो मुख में, षष्ठेश मंगल हो तो कण्ठ में, षष्ठेश बुध हो तो हृदय में और षष्ठेश बृहस्पति हो तो नाभिके मूलमें व्रण कहना चाहिये॥१७॥

नेत्रे पृष्ठे च शुक्रो दिनकरतनयः स्यात्पदे चाधरे चेत्
केतुर्वा सैंहिकेयस्तदनु तनुपतिर्भौमवित्क्षेत्रसंस्थः।
आभ्यामालोकितः सन् भवति हि कतिचित्स्थानगो वा तदानीं
नेत्रे रोगी नरः स्यात्प्रवरमतियुतैर्होरिकैर्ज्ञेयमेवम् ॥ १८ ॥

अ०—शुक्रश्चेत् षष्ठेशस्तनुनिधनगतः नेत्रे पृष्ठे च, दिनकरतनयश्चेत् पदे, चेत् केतुर्वा सैंहिकेयः अधरे व्रणाः स्युः। तदनु भौमविच्चेत्क्षेत्रसंस्थः तनुपतिः आभ्यां आलोकितः सन् कतिचित् स्थानगश्चेत्तदानीं नरः नेत्ररोगी स्यात् एवं प्रवरमतिकहोंरिकैर्ज्ञेयम् ॥ १८ ॥

नेत्र इति। शुक्रश्चेन्नेत्रमूले पृष्ठे च, शनिश्चेत्पदे चरणे, राहुः केतुर्वा अधरे व्रणाः स्युः इति पूर्वश्लोकेनान्वयः। अथ नेत्रव्याधियोगः। तदनु भौमबुधराशिस्थो लग्नेशः भौमबुधदृ: कतिचित्स्थानगोऽपि वा, यत्र कुत्र वा स्यात्तदानीं जातः नेत्ररोगी स्यात्। प्रवरमतियुतैर्होरिकैरेवं ज्ञेयम् ॥ १८ ॥

यदि षष्ठेश शुक्र लग्न या अष्टममें हो तो आंख और पीठमें, शनि षष्ठेश होकर लग्न या अष्टममें हो तो पांवमें, केतु या राहु हो तो अधर (नीचेकी ओष्ठ) में व्रण होता है। लग्नपति मंगल या बुधकी राशिमें स्थित हो और मंगल या बुधसे दृष्ट हो तो वह जातक नेत्र-रोगी होता है। या किसी भी राशि में स्थित लग्नेश मंगल या बुधसे दृष्ट हो तो जातक नत्ररोगी होता है। इस तरह होरावेदियोंमें श्रेष्ठ पण्डितोंको समझना चाहिये ॥ १८ ॥

षष्ठेशे लग्नयाते भवति हि मनुजो वैरिहन्ता धनस्थे
पुत्रात्तार्थोऽतिदुष्टः सहजभवनगे ग्रामदुःखाकरः स्यात्।
नाभिस्थाने च रोगी तनुनिधनपती शत्रुभावस्थितौ ना
नेत्रे वामेतरे स्यादसुरकुलगुरुः सूर्यजस्त्वङ्घ्रिरोगी ॥१९॥

अ०—षष्ठेशे लग्नयाते मनुजः हि वरिहन्ता भवति। धनस्थे, पुत्रात्तार्थः अतिदुष्टः, सहजभवनगे ग्रामदुःखाकरः नाभिस्थाने रोगी च स्यात्। तनुनिधनपती शत्रुभावस्थितौ (तदा) ना वामे नेत्रे, असुरकुलगुरुश्चेत्तदा इतरे (दक्षिणनेत्रे) रोगी स्यात्, सूर्यजस्त्वङ्घ्रि रोगी स्यात् ॥ १९ ॥

षष्ठेश इति। षष्ठभावाधिपे लग्नस्थे जातः शत्रुहन्ता स्यात्। धनस्थे षष्ठेशे पुत्रात्तार्थः, पुत्रेणात्तः गृहीतः अर्थो धनं यस्य सः पुत्रहृतधन इत्यर्थः, अतिदुष्टश्च स्यात्। सहजभवनगे ग्रामस्य दुःखाकरः नाभौ रोगी च स्यात्। लग्नाष्टमपती षष्ठस्थौ ना पुरुषः नेत्ररोगी स्यात्। अत्र वामेतरशब्दोपादानादत्र वाम इति गम्यते। शुक्रः षष्ठेऽष्टमे इतरे दक्षिणनेत्रे रोगी। शनिः पृष्ठे चरणे रोगी स्यात्॥ १९॥

षष्ठेश यदि लग्नमें हो तो जातक शत्रुओं का नाश करनेवाला होता है। द्वितीय भावमें हो तो पुत्रसे उसका धन हरण होता है और अत्यन्त दुष्ट होता है। तृतीय भावमें हो तो ग्रामीणोंको दुःख देनेवाला होता है और नाभि रोगवाला होता है। यदि लग्नेश या अष्टमेश षष्ठभावमें हो तो मनुष्यके बांये नेत्रमें और शुक्र हो तो दाहिने नेत्रमें रोग होता है। और यदि शनि षष्ठ भावमें हो तो मनुष्यके, पांवमें रोग होता है॥ १९॥

दन्ते दन्तच्छदे वा कुमुदपतिरिपुः संस्थितः षष्ठभाव
केतुर्वा लग्ननाथः कुजबुधभवने संस्थितः क्वापि दृष्टः।
स्वेन प्रत्यर्थिना वा भवति जनुषि चेदासनार्धे सरोग-
स्तौ भूमीसूर्यपुत्रौ यदि रिपुगृहगौ तद्भवः स्याद्गदो नुः॥२०॥

अ०—जनुषि यदि कुमुदपतिरिपुः षष्ठभावे संस्थितस्तदा दन्ते दन्तच्छदे वा रोगः स्यात्। लग्ननाथः कुजबुधभवने क्वापि संस्थितः स्वेन प्रत्यर्थिना (शत्रुणा) दृष्टः आसनार्द्धे सरोगः स्यात्। यदि तौ भूमीसूर्यपुत्रौ रिपुगृहगौ (तदा) तद्भवो नुः गदः स्यात्॥ २०॥

दन्त इति। राहुकेतू शत्रुभावे चेद्दन्ते दन्तच्छदे ओष्ठे वा रोगी स्यात्। भौम बुधराशिस्थितो लग्नेशः स्वेन प्रत्यर्थिना स्वशत्रुणा पूर्णदृष्टः यत्र कुत्रापि स्यात्तदा आसनार्द्धे गुदसमीपे वा रोगी स्यात्। यदि तौ भूमिसूर्यपुत्रौ रिपुगृहगौ षष्ठभावसंस्थौ चेत्तदा तद्भवो नुः पुरुषस्य गदो रोगः स्यात्। भूमिपुत्रे रुधिरविकारः, शनावितरः (१)स्यादित्यर्थः॥२०॥

जन्मकालमें यदि राहु या केतु षष्ठ भावमें हो तो दांतमें या ओष्ठमें रोग होता है। लग्नेश मंगल या बुधकी राशि (मेष, वृश्चिक, मिथुन, कन्या) में होकर किसी भी भावमें स्थित हो और अपने शत्रुसे दृष्ट हो तो जातकके आसनार्द्ध (गुदाके समीप) में रोग होता है। और मंगल तथा शनि यदि षष्ठ भावमें हों तो तद्भव अर्थात् रक्त-विकारका रोग होता है और वायु-विकार का रोग होता है॥ २०॥

---

(१) वायुविकारः, इति।

प्रालेयांशौ रिपुस्थे खलखगसहिते मानवो रोगवान् स्यात्
क्रूरैर्निष्पीडितश्चेत्तनुसदनगतः शीतरश्मिस्तदानीम् ।
क्रूरे केन्द्रालयस्थे यदि शुभविहगैर्नेक्षिते रोगवान् स्या-
त्तस्मिन् काव्यालयस्थे कुजगुरुकविभिर्नेक्षिते तद्वदेव ॥ २१ ॥

अ०—प्रालेयांशौ खलखगसहिते रिपुस्थे मानवः रोगवान् स्यात् । चेत्क्रूरैर्निष्पीडितः शीतरश्मिः तनुसदनगतश्चेत् तदानीं मानवः रोगवान् स्यात् । क्रूरे केन्द्रालयस्थे शुभविहगैः नेक्षिते तदा रोगवान् स्यात् । तस्मिन् ( क्रूरे ) काव्यालयस्थे कुजगुरुकविभिः नेक्षिते तद्वदेव रोगवान् स्यात् ॥ २१ ॥

प्रालेयांशाविति । तथा प्रालेयांशौ चन्द्रे खलखगसहिते पापग्रहयुक्ते शत्रुभावस्थे सति रोगवान् स्यात् । क्रूरैर्निष्पीडिते शनिप्रभृतिभिः क्रूरग्रहैः योगेन दृष्ट्या वा पीडिते तनुसदनगते लग्नगे तस्मिन् शीतकरे चन्द्रे तद्वान् रोगी स्यात् । शुभग्रहदृष्टिरहितः केन्द्रगः क्रूरश्चेद्रोगवान् स्यात् । तस्मिन् क्रूरे शुक्रराशिसंस्थे कुजशुक्रगुरुभिर्न दृष्टे तद्वदेव रोगवानेव स्यात् । अत्र यद्यपि विशेषो नोक्तस्तथापि योगकर्तृग्रहस्वामिकफवातपित्तादिकोपजन्यो विशेषरोगो ज्ञेयः ॥ २१ ॥

चन्द्रमा पापग्रह से युक्त होकर षष्ठ भाव में हो तो जातक रोगी होता है । और यदि चन्द्रमा पापग्रह से पीड़ित होकर लग्न में हो तो मनुष्य रोगी होता है । पापग्रह केन्द्र ( १।४।७।१० ) में हो और शुभग्रह की दृष्टि से रहित हो तो जातक रोगी होता है । एवं पाप ग्रह शुक्र की राशि ( वृष, तुला ) में हो तथा मंगल गुरु और शुक्र की दृष्टि से रहित हो तो मनुष्य रोगवान् होता है ॥ २१ ॥

पुँल्लग्ने स्वीयतुङ्गे रिपुभवनपतौ वीक्षितेऽसन्नभोगै-
रङ्गे नूनं नराणामरिजनवशतः स्याद्गदो गूढरूपः ।
रिःफस्थाने स्थिते चेदरिसदनपतौ सिंहिकापुत्रयुक्ते
किंवा सप्ताश्वयुक्ते परगृहवसतिर्नीचवृत्तिर्नरः स्यात् ॥ २२ ॥

अ०—रिपुभवनपतौ पुंल्लग्ने स्वीयतुङ्गे असन्नभोगैः वीक्षिते नूनं नराणामरिजनवशतः गूढरूपः गदः स्यात् । अरिसदनपतौ सिंहिकापुत्रयुक्ते किंवा सप्ताश्वयुक्ते रिःफस्थाने स्थिते चेत् नरः परगृहवसतिः नीचवृत्तिः स्यात् ॥ २२ ॥

पुँल्लग्न इति । षष्ठेशे पुंराशिलग्ने स्वोच्चे वा पापग्रहैर्दृष्टे सति नराणां जातानां अङ्गे शरीरे अरिजनवशतः शत्रुजनकारितः गूढरूपः प्रच्छन्नः गदो रोगः स्यात्, अत्र ग्रहतुङ्गराशीनां प्रायः स्त्रीराशित्वात् पुंल्लग्ने वाशब्दप्रयोगो ज्ञायते । षष्ठेशो राहुयुक्तो यद्वा सूर्ययुक्तः द्वादशे वा स्थितः तदा जातो नरः परगृहवासी नीचवृत्तिश्च स्यात् ॥ २२ ॥

षष्ठेश पुरुष राशि ( मेष, मिथुन, सिंह, तुला, धनु, कुंभ ) में या अपनी उच्च राशिमें हो और पाप ग्रहकी दृष्टिसे युक्त हो तो मनुष्यके शरीरमें शत्रुओंके द्वारा किया हुआ कोई प्रबल गुप्त रोग अवश्य होता है। यदि षष्ठेश राहु या सूर्यसे युक्त होकर बारहवें स्थानमें हो तो जातक दूसरेके घरमें रहने वाला और नीच कर्म करने वाला होता है ॥ २२ ॥

अथ सप्तमभावफलं निरूपयिष्यन् विवाहयोगानाह—

यावन्तो वा विहङ्गा मदनसदनगाश्चेन्निजाधीशदृष्टा-
स्तावन्तो नुर्विवाहास्त्वथ सुमतिमता ज्ञेयमित्थं कुटुम्बे ।
कार्या होरागमज्ञैरधिकबलवतां खेचराणां हि योगा-
दादेश्यं तत्र वीर्यं रविविधुकुभुवामङ्गदिक्शैलसंख्यम् ॥ २३ ॥

अ०—अथ यावन्तो विहङ्गाः मदनसदनगाः निजाधीशदृष्टाश्चेत्तावन्तो नुः विवाहाः स्युः। वा इत्थं सुमतिमता कुटुम्बेऽपि ज्ञेयम्। हि अधिकबलवतां खेचराणां योगात् होरागमज्ञैः ( विचारः ) कार्यः। तत्र रविविधुकुभुवामङ्गदिक्शैलसंख्यं वीर्यमादेश्यम् ॥ २३ ॥

यावन्त इति। यावन्तो ग्रहाः सप्तमेशेन दृष्टाः तावन्तो विवाहाः नुः पुरुषस्य ज्ञेयाः। सुमतिमता जन्मलग्नाभिज्ञेन दैवज्ञेन एवमुक्तप्रकारेण कुटुम्बे जनकभ्रात्रादौ ज्ञेयम्(१)। होरागमज्ञैर्जातकशास्त्रविद्भिरधिकबलवतां ग्रहाणामेवं योगाद्विचारः कार्यः। तत्राधिकबलं रविविधुकुभुवां सूर्यचन्द्रभौमानाम्, अङ्गदिक्शैलसंख्यमादेश्यम्, सूर्यस्य षड् रूपाणि, चन्द्रस्य दश रूपाणि, भौमस्य सप्त रूपाणि, अन्येषां षट् रूपाण्येव 'अङ्गरूपाधिको बली'ति पद्धतिवचनात् ॥ २३ ॥

जितने संख्यक ग्रह सप्तम स्थान में हों और सप्तमेश से दृष्ट हों उतने ही जातक के विवाह होंगे। इसी तरह बुद्धिमानों को कुटुम्ब ( दूसरे ) भाव में भी जानना चाहिये। यह विचार होराशास्त्र जानने वाले अधिक बलवान् ग्रह के अनुसार ही करें। ग्रहका बल यहां सूर्यका ६, चन्द्रमाका १०, मंगलका ७, बुध गुरु शुक्र और शनिका ६ होता है ॥ २३ ॥

केन्द्रस्था वा त्रिकोणे यदि खलु गृहिणीकारकाख्या नभोगाः
कामार्थेशौ निजर्क्षे परिणयनविधिः स्यात्तदानीं नुरेकः ।
जायाधीशः कुटुम्बाधिपतिरपि युतश्चेत्त्रिके गर्हिताख्यै-
र्यावद्भिः शुक्रयुक्तो नियतमिह भवेत्तावतीनां विरामः ॥ २४ ॥

---

(१) कुटुम्बे द्वितीयभावेऽपीत्थं ग्रहयोगवशाद्विवाहो वाच्यः। न तु कुटुम्बानां एवं विवाहो ज्ञेयः, इति संशोधकः।

अ०—यदि गृहिणीकारकाख्याः नभोगाः केन्द्रस्थाः वा त्रिकोणे खलु कामार्थेशौ निजर्क्षे ( सति ) तदानीं नुः एकः परिणयनविधिः स्यात् । जायाधीशः कुटुम्बाधिपतिः अपि शुक्रयुक्तः यावद्भिः गर्हिताख्ययुतः त्रिके भवेत् तावतीनां वधू नियतं विरामः भवेत् ॥ २४ ॥

केन्द्रस्था इति । गृहिणीकारकाः सप्तमभावे शुभग्रहाः 'शुक्रेन्दुजीवशशिजैः सकलैस्त्रिभिर्वा द्वाभ्यां कलत्रभवने च तथैककेन । एषां गृहेऽपि च गणेऽपि विलोकिते वा सन्ति स्त्रियो मदनभावपतिस्वभावाः ॥' इति कल्याणवर्मवचनात् । एते केन्द्रस्थाः वा त्रिकोणे स्युः तथा सप्तमद्वितीयपती स्वभवने स्यातां तदा जातस्य नुः पुरुषस्य परिणयनविधिः विवाहः एकः स्यात् । सप्तमभावाधीशः द्वितीयाधिपो वा शुक्रयुक्तः यावद्भिः क्रूरग्रहैर्दृष्टः संहतः त्रिके स्यात् तावतीनां स्त्रीणां विरामो नाशः स्यात् ॥ २४ ॥

यदि स्त्रीकारक ग्रह केन्द्र ( १।४।७।१० ) में या त्रिकोण ( ९।५ ) में हों और सप्तमेश तथा द्वितीयेश अपनी २ राशि में हों तो जातकका एक ही विवाह होता है । और सप्तमेश अथवा द्वितीयेश शुक्र से युक्त होकर त्रिक ( ६।८।१२ ) में हो और जितने पाप ग्रह से युक्त हो या दृष्ट हो उतनी ही उस जातककी स्त्रियों का नाश होता है ॥ २४ ॥

अथ गर्भाभावयोगानाह—

लग्नस्थे सप्तसप्तौ दिनमणितनये कामगेऽथार्कमन्दौ
द्यूने चन्द्रे नभःस्थे न च यदि गुरुणाऽऽलोकिते नो प्रसूते ।
द्वेष्येशे मित्रमन्दौ द्विषि सितकिरणेऽस्ते बुधनेक्षिते नो
सूते द्वेष्ये जलर्क्षे यदि कुजरविजौ गर्भिणी स्यान्न नारी ॥ २५ ॥

अ०—सप्तसप्तौ लग्नस्थे दिनमणितनये कामगे अथार्कमन्दौ द्यूने, चन्द्रे नभःस्थे यदि गुरुणा आलोकिते च न ( तदा ) नो प्रसूते । द्वेष्येशे जलर्क्षे (तत्र) यदि कुजरविजौ ( भवेतां तदा ) नारी गर्भिणी न स्यात् ॥ २९ ॥

लग्नस्थ इति । सप्तसप्तौ सूर्ये लग्नस्थे शनौ सप्तमे एको योगः । अथ सूर्यशनी सप्तमे गुरुदृष्टिरहितश्चन्द्रो दशमे इति द्वितीयो योगः । अत्र नारी नो प्रसूते । द्वेष्येशः शत्रुभवनस्वामी तथा मित्रमन्दौ रविशनी च द्विषि षष्ठे, बुधेन दृष्टः सितकिरणश्चन्द्रोऽस्ते सप्तमे अयं तृतीयो योगः । अत्र नारी नो प्रसूते । कुजशनी षष्ठे चतुर्थे यदि तदा जातस्य नारी गर्भिणी न स्यादिति चतुर्थो योगः । इति सप्तमभावः ॥ २५ ॥

लग्न में सूर्य और सप्तम में शनि हो (१) या सप्तम स्थान में सूर्य और शनि हो तथा दशम स्थान में चन्द्रमा बृहस्पति की दृष्टि से रहित हो (२) या षष्ठेश सूर्य तथा शनि के सहित षष्ठ भाव में हो और चन्द्रमा बुध से दृष्ट होकर सप्तम में हो (३) तो जातककी स्त्री प्रसूता नहीं होती है। यदि षष्ठभाव में या चौथे स्थान में मंगल या शनि हो तो उस जातक की स्त्री गर्भयुक्ता भी नहीं होती है ॥ २९ ॥

अथाष्टमभावः, तत्र कष्टकर्मकरादियोगमाह—

रन्ध्रस्थानस्थिता वा स्थिरभवनगताः शुक्रवागीशसौम्याः
कृच्छ्राणां कर्मणां ना भवति हि नियतं कारकः स्तब्धभावः।
बाल्ये दुःखी नरः स्यान्निधनगृहपतौ लाभयाते सुखी स्या-
त्पश्चात्पापेऽल्पमायुः शुभखगसहिते दीर्घमायुर्नराणाम ॥२६॥

अ०—शुक्रवागीशसौम्याः रन्ध्रस्थानस्थिताः वा स्थिरभवनगताश्चेत्तदा हि ना नियतं कृच्छ्राणां कर्मणां कारकः स्तब्धभावः स्यात्। निधनगृहपतौ लाभयाते नरः बाल्ये दुःखी पश्चात् सुखी स्यात्। निधनपतौ पापेऽल्पमायुः, शुभखगसहिते नराणां दीर्घमायुः स्यात् ॥ २६ ॥

रन्ध्रेति। शुक्रगुरुबुधाः स्थिरराशिगता वा तदा जातः ना पुरुषः नियतं नियमेन कष्टकर्मणां कर्ता स्यात्। स्तब्धभावः कठिनचित्तश्च स्यात्। अष्टमभावेशे लाभगे बाल्ये बाल्यावस्थायां दुःखी पश्चात्सुखी स्यात्। लाभगेऽष्टमेशे पापे अल्पायुः स्यात्। तस्मिन्नेव शुभग्रहयुक्ते जातानां दीर्घमायुः स्यात् ॥ २६ ॥

जिसके जन्मकाल में शुक्र बृहस्पति और बुध अष्टम में या स्थिर राशि (वृष, सिंह, वृश्चिक, कुम्भ) में हो वह जातक निश्चय करके कठिन कर्मों को करने वाला और कठोर हृदय वाला होता है, यदि अष्टमेश एकादशभावमें हो तो जातक बालकपन में दुःखी और पीछे सुखी होता है। यदि अष्टमेश पापग्रह हो और एकादशमें हो तो जातक अल्पायु होता है। यदि शुभग्रह से युक्त होकर अष्टमेश एकादश में हो तो जातक दीर्घायु होता है ॥ २६ ॥

कुर्यादायुर्गृहेशः खलखगयुगरिप्रान्त्यसंस्थोऽल्पमायु-
श्चेल्लग्नाधीशयुक्तो निधनभवनपः स्वल्पमायुः प्रदत्ते।
रन्ध्रस्थो वा चिरायुस्तदनु रविभवस्तत्र तद्वल्लयेशः :
कोशस्थानस्थितश्चेज्जनुषि हि मनुजो वैरियुक्तस्करः स्यात् ॥७॥

अ०—आयुर्गृहेशः खलखगयुक् अरिप्रान्त्यसंस्थः अल्पमायुः कुर्यात्। निधनभवनपः (अरिप्रान्त्यसंस्थः) लग्नाधीशयुक्तश्चेत्स्वल्पमायुः प्रदत्ते। (निधनभवनपः) रन्ध्र-

स्थः चिरायुर्वा स्यात्। तदनु तत्र रविभवस्तद्वत् ( चिरायुः )। लयेशः कोशस्थान-स्थितश्चेत्तदा जनुषि हि मनुजः वैरियुक् तस्करः स्यात् ॥ २७ ॥

कुर्यादिति। आयुर्गृहेशः अष्टमपतिः क्रूरयुक्तः षष्ठद्वादशगतः तदाल्पमायुः कुर्यात्। अष्टमपतिः लग्नेशयुक्तः अरिप्रान्त्यसंस्थः। इत्यनुषङ्गः। तदाऽल्पमायुः प्रदत्ते। अष्टमेशः रन्ध्रन्यो वा चिरायुः प्रदत्ते। अष्टमेशः तदनु रविभत्रो वा तत्राष्टमे तद्वत् चिरायुः प्रदत्ते लयेशः अष्टमेशः कोशस्थानस्थितः द्वितीये स्थितश्चेत्तदा तस्करो वैरियुक्तश्च स्यात् ॥ २७ ॥

अष्टमेश पापग्रह से युक्त होकर यदि छठें या बारहव स्थान में हो तो अल्पायु करता है। यदि अष्टमेश अष्टम में हो तो दीर्घायु करता है। यदि अष्टमेश लग्नाधीश से युक्त होकर छठें या बारहवें भाव में हो तो जातक अल्पायु होता है। यदि शनि अष्टम में हो तो दीर्घायु होता है। और यदि जन्मकाल में अष्टमेश द्वितीय भाव में हो तो मनुष्य शत्रुओं से युक्त और चोर होता है ॥ २७ ॥

आयुर्देहाधिनाथौ निधनरिपुगतौ हीनवीर्यौ प्रसूतौ
संग्रामे कीर्तिशेषं व्रजति बलयुतौ तौ तदा तज्जयाप्तिम्।
शुक्रेणान्दोलिकायास्तनुपविधुयुतो वाहनस्थाननाथो
मूर्तौ दन्तावलेन्द्रैरथ गुरुसहितः स्याज्जयो वाजिवाहैः ॥२८॥

अ०—प्रसूतौ हीनवीर्यौ आयुर्देहाधिनाथौ निधनरिपुगतौ ( तदा ) संग्रामे कीर्त्ति-शेषं व्रजति। तौ बलयुतौ ( चेत ) तदा जयाप्तिं व्रजति। वाहनस्थाननाथः शुक्रेण युक्तः ( तदा ) आन्दोलिकायाः जयः भवति। तनुपविधुयुतः मूर्त्तौ ( चेत्तदा ) दन्तावलेन्द्रैः जयः स्यात्। अत्र सुखेशः गुरुसहितः मूर्त्तौ चेत्तदा वाजिवाहैः जयः स्यात् ॥ २८ ॥

आयुरिति। प्रसूतौ जन्मसमये आयुर्देहाधिनाथौ अष्टमलग्नपती हीनवीर्यौ अष्टमषष्ठगतौ तदा संग्रामे कीर्तिशेषं प्राप्नोति, संग्रामाभिमुखो युद्धं विहाय पञ्चत्वं प्राप्नोतीत्यर्थः। तावेवायुर्देहाधिनाथौ सबलौ चेद्विजयी भवति। चतुर्थेशः शुक्रेण युतश्चेत् आन्दोलिकायाः शिविकाया जयः शिविकारूढो जयतीत्यर्थः। चतुर्थेशो लग्नेशेन चन्द्रेण च युतः मूर्तौ लग्ने स्थितश्चेत्तदा दन्तावलेन्द्रैः महागजैः जयः स्यात्। अथ चतुर्थेशो गुरुयुतः लग्ने चेत्तदा वाजिवाहैः वाजिराजैः गजेन्द्रैश्च सह जयः स्यात्। इत्यष्टमभावः ॥ २८ ॥

जिसके जन्मकालमें अष्टमेश और लग्नेश हीन बली होकर अष्टम और षष्ठ भाव में हों वह मनुष्य संग्राम में कीर्तिशेष हो जाता है ( मर जाता है )। यदि बलवान्

लग्नेश और अष्टमेश हो तो संग्राम में विजय करता है। चतुर्थेश शुक्र से युक्त हो तो आन्दोलिका ( सवारी ) में बैठकर जय पाता है। चतुर्थेश तथा लग्नेश चन्द्रमासे युत होकर लग्नमें हों तो हाथी पर बैठ कर जय पाता है। और चतुर्थेश बृहस्पति के सहित लग्न में हो तो घोड़ों और हाथियों पर बैठ कर जय पाता है॥ २८॥

अथ नवमभावस्तत्र शुभयोगमाह—

भाग्येशो मूर्तिवर्ती सुरपतिगुरुणाऽऽलोकितो भूपवन्द्यो
लग्नस्थो वाहनेशो नवमपतिरुभौ पश्यतश्चेत्स्वगेहम्।
सर्वासामास्पदं स्यान्मनुज इह तदा सम्पदां वाहनेन्द्रो
रन्ध्रस्थानस्थितश्चेद्व्रजति हि मनुजो भाग्यराहित्यमेवम्॥२९॥

अ०—सुरपतिगुरुणा आलोकितः भाग्येशः मूर्तिवर्ती चेत्तदा मनुजः भूपवन्द्यः ( स्यात् ) वाहनेशः नवमपतिः लग्नस्थः उभौ स्वगेह पश्यतश्चेत्तदा मनुजः इह सर्वासां सम्पदामास्पदं स्यात्। तथा वाहनेन्द्रः रन्ध्रस्थानस्थितश्चेत् तदा हि मनुजः भाग्यराहित्यं व्रजति। एवं होरागमज्ञैः हीनानां प्राप्तिः तदनु चपलता 'च' ज्ञेया इत्यग्रिमश्लोकेन सम्बन्धः॥ २९॥

भाग्येश इति। नवमभावेशो गुरुदृष्टः लग्नस्थश्चेत्तत्र जातो राजवन्द्यः राजमान्यः स्यात्। भाग्येशः लग्नस्थः चतुर्थनवमपती स्वभवनं चतुर्थपतिः चतुर्थं नवमपतिर्नवमं पूर्णदृष्ट्या पश्यतश्चेत्तदा सर्वासां धनधान्यसुवर्णादिसम्पदां आस्पदमाश्रयः मनुजः स्यात्। वाहनेशः अष्टमस्थस्तदा मनुजः भाग्यराहित्यं व्रजति। होराविद्भिरेवंप्रकारेण भाग्यराहित्ये नुः हीनानां शुभलक्षणवयोबलादिरहितानां वाहनानां प्राप्तिस्तदनु चपलताऽस्थिरता च ज्ञेयेत्यग्रिमेण सम्बन्धः॥ २९॥

जिस के जन्मकाल में गुरु से दृष्ट होकर नवमेश लग्न में हो वह मनुष्य राजाओं से पूजित होता है। यदि भाग्येश लग्नस्थित हो तथा चतुर्थेश-भाग्येश दोनों अपनी २ राशि को देखते हों तो मनुष्य सम्पत्तियों का स्थान होता है। अर्थात् सभी सम्पत्ति से युक्त होता है। यदि चतुर्थेश अष्टम स्थान में हो तो मनुष्य भाग्य से रहित ( हीन ) होता है और उसे बलहीन वाहनों की प्राप्ति और अस्थिरता होती है, यह होराशास्त्रज्ञों के लिये आदेश्य है॥ २९॥

हीनानां वाहनानां तदनु चपलता प्राप्तिरेवं नराणां
ज्ञेया होरागमज्ञैरथ नवमपतौ लाभगे राजवन्द्यः।
दीर्घायुर्धर्मशीलस्तदनु धनवपुर्वाहनेशाः स्वगेहे
धर्मेशो लग्नवर्ती जनुषि यदि गजस्वामिसहासिनानाम्॥३०॥



अ०—अथ नवमपतौ लाभगे राजवन्द्यः दीर्घायुः धर्मशीलः ( स्यात् )। तदनु

जनुषि यदि धनवपुर्वाहनेशाः स्वगेहे, धर्मेशो लग्नवर्त्ती (चेत्तदा) गजस्वामिसिंहासनानां प्राप्तिः स्यात् ॥ ३० ॥

हीनानामिति। अथ नवमेशे लाभगे राजमान्यः दीर्घायुर्धर्मशीलश्च स्यात्। तदनु जनुषि धनवपुर्वाहनेशाः द्वितीयलग्नचतुर्थपतयः स्वगेहे लग्नेशो लग्ने धनेशो धने वाहनेशो वाहने इत्यर्थः। धर्मेशो लग्नगतो यदि तदा गजस्वामिसिंहासनानां प्राप्तिरित्यनुषङ्गः। तत्र गजाः हस्तिनः स्वामिसिंहासनानां राजाधिष्ठेयसिंहासनं राज्यकार्येषु भद्रासनं तेषां प्राप्तिः स्यात् ॥ ३० ॥

नवमेश यदि ग्यारहवें स्थान में हो तो मनुष्य राज्यमान्य, दीर्घायु और धर्मशील होता है। जिसके जन्मकाल में द्वितीयेश लग्नेश और चतुर्थेश अपनी अपनी राशि में हों, तथा नवमेश लग्न में हो तो मनुष्य को हाथी तथा सिंहासन का स्वामित्वलाभ होता है ॥ ३० ॥

योगानां स्यादमीषां प्रचुरबलयुतो योऽधिपस्तद्दशायां
लब्धिश्चान्तर्दशायामथ गुरुभृगुजौ वाहनाधीशयुक्तौ।
केन्द्रेऽयाने त्रिकोणे त्वथ गुरुकवियुग्वाहनस्थानगो वा
भाग्याधीशः स्वराशौ भवति नरपतिर्वाहनव्यूहनाथः ॥ ३१ ॥

अ०—यः अमीषां योगानामधिपः प्रचुरबलयुतः स्यात् तद्दशायाम्, अन्तर्दशायां च लब्धिर्भवति। अथ वाहनाधीशयुक्तौ गुरुभृगुजौ केन्द्रे, अयाने, त्रिकोणे भवेतां, अथ गुरुकवियुक् भाग्याधीशः वाहनस्थानगः वा स्वराशौ (चेत्तदा मनुजः) वाहनव्यूहनाथः नरपतिः भवति ॥ ३१ ॥

योगानामिति। अमीषामुक्तवक्ष्यमाणानां योगानां योऽधिपः योगकर्ता यो ग्रहः अधिकबलयुतस्तस्य दशायामन्तर्दशायां लब्धिः योगफललाभः स्यात्। अथ गुरुशुक्रौ वाहनेशयुतौ सन्तौ केन्द्रे अयाने आगमे एकादशे इत्यर्थः, त्रिकोणे स्यातामित्येको योगः। अथ गुरुशुक्रयुतो भाग्याधीशः भाग्ये चतुर्थे वा स्यात्तदायं द्वितीयो योगः। अत्र योगद्वये जातः वाहनव्यूहानां समुदायानां नाथःईशो नरपतिः स्यात् ॥ ३१ ॥

इन कहे हुये योगों का स्वामी जो अधिक बलशाली हो, उन की दशा में या अन्तर्दशा में फल की प्राप्ति होती है। चतुर्थेश से युक्त बृहस्पति तथा शुक्र केन्द्र (१।४।७।१०) में एकादश में या त्रिकोण (९।५) में हों एवं गुरु और शुक्र से युक्त होकर नवमेश चतुर्थ स्थान में हो या अपनी राशि में हो तो मनुष्य वाहनों के समूहों का स्वामी होता है और राजा होता है ॥ ३१ ॥

अथ चिन्तायोगाः—

कर्मस्थे क्षेत्रचिन्ता त्रिकभवनगते सौख्यचिन्ता महीजे

वागीशे यानभूषावसनहयभवा चामरच्छत्रचिन्ता ।
प्रालेयांशौ सिते स्यादथ मदनगते वाक्पतौ पुत्रचिन्ता
सन्तानस्थानयाते हिमकरतनये बुद्धिजाऽथ त्रिकोणे ॥ ३२ ॥
मार्तण्डे तातबन्ध्वोरथ सुतनवमद्यूनगे दानवेज्ये
यात्राचिन्ता नराणामथ नवमसुते पुत्रजा वासवेज्ये ॥ ३२½ ॥

अ०—महीजे कर्मस्थे क्षेत्रचिन्ता (स्यात्)। त्रिकभवनगते सौख्यचिन्ता (स्यात्)। वागीशे (त्रिकभवनगते) यान-भूषा-वसन-हय-भवा (चिन्ता स्यात्)। प्रालेयांशौ सिते वा (त्रिकभवनगते) चामरच्छत्रचिन्ता स्यात्। अथ वाक्पतौ मदनगते पुत्रचिन्ता (स्यात्)। अथ हिमकरतनये सन्तानस्थानयाते बुद्धिजा चिन्ता स्यात्। अथ मार्त्तण्डे त्रिकोणे (सति) तातबन्ध्वोः चिन्ता स्यात्। अथ दानवेज्ये सुतनवमद्यूनगे नराणां यात्राचिन्ता (स्यात्)। अथ वासवेज्ये नवमसुते पुत्रजा चिन्ता स्यात् ॥ ३२-३२½ ॥

कर्मस्थ इति। भौमे कर्मस्थे क्षेत्रचिन्ता कर्षणबीजवापक्षेत्रसंस्कारादिप्रकारकक्षेत्रचिन्ता इत्यर्थः। त्रिकभवनगते षष्ठाष्टमद्वादशे महीजे सौख्यचिन्ता सकलविषयप्रयुक्तसौख्यचिन्ता स्यादित्यर्थः। वागीशे त्रिकस्थे वाहनभूषणवस्त्राश्वभवा चिन्ता स्यात्। चन्द्रे सिते वा त्रिकस्थे चामरच्छत्रचिन्ता तत्प्राप्तौ रक्षणे च चिन्ता स्यात्। अथ वाक्पतौ गुरौ सप्तमस्थे पुत्रचिन्ता पुत्रविषयकगोरक्षणादिचिन्तेत्यर्थः। बुधे पञ्चमे बुद्धिजा चिन्ता। सूर्ये त्रिकोणस्थे पितुर्बान्धवस्य च चिन्ता। शुक्रे सुतनवमसप्तमगे यात्राचिन्ता। अथ गुरौ नवमपञ्चमे पुत्रजा पुत्रभवा चिन्ता स्यात्। चिन्ता नाम येषां जनानां क्षेत्रादिसंभवस्तेषां तद्विषयलाभशुभानुकूल्यप्रातिकूल्यादिसंस्मृतिः। इति नवमभावः ॥ ३२-३२½ ॥

मंगल दशमस्थान में हो तो क्षेत्र (खेत) की चिन्ता और मंगल त्रिक (६।८।१२) में हो तो सुख सामग्री की चिन्ता होती है। यदि बृहस्पति त्रिक में हो तो यान (सवारी) भूषा (जेवर) वसन (वस्त्र) हय (घोड़ा) की चिन्ता होती है। यदि चन्द्रमा या शुक्र त्रिक में हो तो चामर और छत्र की चिन्ता होती है। बृहस्पति सप्तम में हो तो पुत्रचिन्ता, बुध पञ्चम स्थान में हो तो बुद्धि की चिन्ता होती है और सूर्य त्रिकोण (९।५) में हो तो पिता तथा बान्धवों की चिन्ता होती है। शुक्र यदि पञ्चम, नवम या सप्तम स्थान में हो तो मनुष्य को यात्रा (परदेश गमन) की चिन्ता होती है और बृहस्पति नवम या पञ्चम स्थान में हो तो पुत्र की चिन्ता होती है ॥ ३२-३२½ ॥

अथ दशमफलमर्थेनाह—

कर्माधीशो विवीर्यो यदि जनुषि तदा सर्वकर्मास्पदं नो
गेहे स्वीये यदाऽसौ शुभविहगयुतो मानवो मानशीलः ॥ ३३ ॥

अ०—यदि कर्माधीशः जनुषि विवीर्यः तदा सर्वकर्मास्पदं नो स्यात्। यदाऽसौ (कर्माधीशः) शुभविहगयुतो स्वीयगेहे तदा मानवः मानशीलः स्यात् ॥ ३३ ॥

कर्माधीश इति। जनुषि कर्मभावेशो विवीर्यो निर्बलश्चेत्तदा जातः सर्वकर्मास्पदं सर्वकर्मणामास्पदं स्थानं नो सर्वकर्मसाधको न स्यात्। अर्थात् जनुषि कर्माधीशो बली चेत्सर्वाणि कर्माणि साधयेज्जात इत्यर्थः। यदा शुभग्रहयुतो दशमाधीशः स्वीयगेहे दशमे चेत्तदा जातो मानवो मानशीलो मानी भवेत् ॥ ३३ ॥

जिसके जन्मकाल में दशमेश बलहीन हो वह मनुष्य सभी कार्योंका स्थान नहीं होता है। यदि दशमेश शुभ ग्रह से युक्त होकर अपनी राशि में हो तो वह मनुष्य मानी होता है ॥ ३३ ॥

अथ दीर्घमध्यायुर्योगानाह—

लाभे केन्द्रे त्रिकोणे तनुनिधननभःस्थानपाः संस्थिताश्चे-
द्दीर्घायुः पापखेटाः पणफरहिबुकत्रिस्थिता मध्यमायुः।
हीनायुः प्रोक्तमेते यदि जनुषि नृणां स्युस्तदाऽऽपोक्लिमस्था
रन्ध्रस्थानस्थितानां तनुपतिगगनस्वामिसूर्यात्मजानाम् ॥ ३४ ॥
यो हीनस्तद्दशायुस्त्वथ निजभवने धर्मकर्मात्मजेशा-
श्चेत्स्युस्तेषां दशायां बहुलबलवशाद्धर्मबुद्धिर्नराणाम्।
हानिः स्यादन्यथाऽसौ तनुनिधनपती भानुपुत्रेण युक्तौ
स्यातां स्वर्भानुना चेत्तदनु च शिखिना तद्दशायां व्रणाः स्युः ॥ ३५ ॥

अ०—यदि नृणां जनुषि तनु-निधन-नभःस्थानपाः लाभे केन्द्रे त्रिकोणे संस्थिताश्चेत्तदा दीर्घायुः। पापखेटाः पणफर-हिबुक-त्रिस्थिताः (तदा) मध्यायुः (प्रोक्तम्)। एते आपोक्लिमस्थास्तदा हीनायुः प्रोक्तम्। रन्ध्रस्थानस्थितानां तनुपतिगगनस्वामिसूर्यात्मजानां (मध्ये) यः हीनः तद्दशायुः स्यात्। अथ धर्म-कर्मात्मजेशाः निजभवने स्युश्चेत्तदा तेषां दशायां नृणां बहु-बलवशात् धर्मबुद्धिः (स्यात्), अन्यथा हानिः स्यात्। तनुनिधनपती भानुपुत्रेण स्वर्भानुना शिखिना च युक्तौ असौ (चेत्तदा) तद्दशायां नराणां व्रणाः स्युः ॥ ३४–३५ ॥

लाभ इति। यदा नृणां जन्मसमये लग्नाष्टमदशमेशाः लाभे केन्द्रे त्रिकोणे च स्थिताश्चेद्दीर्घायुः स्यात्। पापग्रहाः पणफरचतुर्थतृतीयस्थिताः मध्यमायुः स्यात्।

एते पूर्वोक्ता आपोक्लिमस्थाश्चेदल्पायुः स्यात्। द्वात्रिंशद्वर्षादर्वाक् हीनायुः ततो मध्यायुः, चतुःषष्ट्यनन्तरं दीर्घायुर्ज्ञेयम्। लग्नेशदशमेशशनीनामष्टमस्थानस्थितानां मध्ये यो हीनो हीनबलस्तस्य दशापर्यन्तमायुः स्यादित्युत्तरेण सम्बन्धः॥ ३४॥

य इति। अथ धर्मकर्मात्मजेशाः नवमदशमपञ्चमेशाः स्वभवने नवमादिके स्युस्तदा तेषां योऽधिकबलस्तस्य दशायां जातस्य धर्मबुद्धिः स्यात्। अन्यथा परभवने यदा तेषां योऽधिकबलस्तद्दशायां धर्महानिः स्यादित्यर्थः। 'लग्नाष्टमपती यदि शनिराहुकेतूनामन्यतमेन युतौ षष्ठस्थौ तद्दशायां तनुनिधनपत्योरधिकबलस्य दशायां व्रणाः स्युः॥ ३५॥

जिसके जन्मकाल में लग्नेश अष्टमेश तथा दशमेश एकादश में, केन्द्र (१।४।७।१०) में या त्रिकोण (९।५) में तो वह जातक दीर्घायु होता है*। पापग्रह पणफर (२।५।८।११), चतुर्थ या तृतीय स्थान में हो तो मध्यायु होता है। यदि पापग्रह आपोक्लिम (३।६।९।१२) में हो तो हीनायु होता है। लग्नेश दशमेश तथा शनि यदि अष्टमस्थित हों और इन में जो अल्पबली हो उसकी दशापर्यन्त आयु होती है। एवं नवमेश दशमेश तथा पञ्चमेश यदि अपनी २ राशि में हों अर्थात् नवमेश नवम में, दशमेश दशम में और पञ्चमेश पंचम में हों इनमें जो ग्रह अधिक बलशाली हो उसकी दशा में मनुष्य की धार्मिक बुद्धि होती है। इससे अन्यथा (उलटा) हो याने ये ग्रह अन्य राशि में हों और बलहीन हों तो मनुष्य कार्य से हीन होता है। लग्नेश तथा अष्टमेश शनि, राहु या केतु इनमें से किसी से युक्त होकर षष्ठ भाव में हो और इनमें जो बलवान् हो उसकी दशा में जातक को घाव, फोड़ा, फुन्सी आदि होता है॥ ३४-३५॥

यानेशस्तत्र संस्थो यदि भवति तदा यानहेतुर्मृतिः स्या-
च्चौराच्छस्त्रेण, चिन्ता नवमभवनतो भाग्यजाता विधेया।
व्योम्नो भूपालभूषावसनहयमहत्कर्मणां प्राप्तिचिन्ता
लाभस्थानेऽखिलानां व्ययनिधनगृहात्कल्मषाणां विधेया॥ ३६॥

---

* रसाङ्कै ९६ र्गजाभ्रेन्दुभिः १०८ शून्यमासै १२० स्त्रिधा दीर्घमायुः कलौ संप्रदिष्टम्।
चतःषष्टि ६४ दाह्वद्र्य ७२ शांति ८० प्रमाणैर्मतं मध्यमायुर्नृणां वत्सरैः स्यात्॥
तथा द्वित्रि ३२ षड्वह्नि ३६ शून्याब्धि ४० वर्षैर्भवेदल्पमायुर्नराणां युगान्ते॥

भाव—दीर्घायु=९६।१०८।१२०, मध्यायु=६४।७२।८०। अल्पायु=३२।३६।४० ये पूर्ण में अल्पायु, पूर्ण में मध्यायु, पूर्ण में पूर्णायु। मध्य में अल्पायु, मध्य में मध्यायु, मध्य में पूर्णायु, और हीन में अल्पायु, हीन में मध्यायु और हीन में पूर्णायु के वर्ष-प्रमाण है।

अ०—यदि यानेशः तत्र ( षष्ठभावे ) संस्थो भवति तदा यानहेतुः चौरात् शस्त्रेण मृतिः स्यात् । नवमभवनतः भाग्यजाता चिन्ता विधेया । व्योम्नः भूपाल-भूषा-वसन-हय-महत्कर्मणां प्राप्तिचिन्ता विधेया । लाभस्थानेऽखिलानां प्राप्तिचिन्ता विधेया । व्ययनिधनगृहात्कल्मषाणां चिन्ता विधेया ॥ ३६ ॥

यानेश इति । चतुर्थेशस्तत्र षष्ठभावे चेत्तदा यानहेतुर्मृतिः स्यात् । चौराच्छस्त्रेण च मृतिः । तत्रेति अरिभावपरामर्शेन यानेशस्य शन्यादियोगे वक्ष्यते । अयमर्थः—शनियोगे यानहेतोर्मृतिः, राहुयोगे चौरान्मृतिः, केतुयोगे शस्त्रेण मृतिः । अथ संक्षेपादुक्तानां नवमादिभावानां सामान्यचिन्तालम्बनमुच्यते—नवमभावतो भाग्यजाता चिन्ता विधेया । अयं भावः—भाग्ये यो ग्रहो भाग्येशो यो ग्रहः, भाग्यभवनस्थो यो राशिस्तद्द्वारा केन्द्रप्रक्षात् भाग्यभवने शुभाशुभवर्गविवेकः । भाग्यभाग्येशबलाबलत्वमित्यादि विचार्य जातकशास्त्रविचारं परिभूय बुद्ध्या फलं वक्तव्यम् । तथाभिहितं कल्याणवर्मणा—'भाग्यर्क्षपतिः कस्मिन्को वा भाग्यर्क्षमाश्रितो विहगः । बलवान्मध्यबलो वा' इत्यादि । तथान्यत्र—

भाग्ये बलिष्ठे यदि मेषराशौ चतुष्पदोत्थं प्रकरोति धर्मम् ।
वृषे बलिष्ठे बहुधेनुदायी युग्मे तथा ब्राह्मणभोज्यदाता ॥
स्यात् कर्कटे तीर्थपरश्च सिंहे जातो मनुष्यः परधर्मनिष्ठः ।
यदृष्टधर्मा मनुजो युवत्यां प्रसिद्धधर्मा तुलजो मनुष्यः ॥
प्रसिद्धधर्मे निरतोऽष्टमे भवश्चापे तु शास्त्रे विहगः स्वधर्मा ।
मृगे विरज्येत सुध ैतो ना कुम्भे तु पापादिभवो हि धर्मः ॥
मीने बलिष्ठे शुभभावजातो तडागवापीभवधर्मनिष्ठः ।

भाग्येशे लग्नगे भूपकर्मकारी धने धनी । बन्धुप्रियो भ्रातृभावे चतुर्थे पितृभक्तिमान् ॥
कृती तु पञ्चमे षष्ठे जातो विकलकारकः । सप्तमे सुभगस्त्रीमान् षण्ढः पाप्यष्टमे स्थिते ॥
स्वभे दाता देवभक्तो दशमे नृपकार्यकृत् । लाभे दीर्घायुरखिलो व्यये देशान्तरस्थितः ॥
स्वस्वामिदृष्टियुक्तश्चेत्स्वदेशफलदायकः ॥ इति ।

मुनिभिरुक्तम्—'होरागमश्च बलवान्येषां ते श्रेष्ठमानवाः ।

होरासारे—

भाग्ये खलाः स्वगृहगाः शुभदृष्टियुता यदि । सौभाग्यसौख्ययुक्तस्य जन्म विद्याच्च भूपतेः ॥
क्रूरा नीचारिभांशस्था भाग्येशेन च वीक्षिताः । सर्वदा भाग्यहीनस्य जन्म विद्यान्न संशयः ॥
लग्नगे भान्तरे राशौ महाभाग्यो हि भाग्यतः । एकेन मध्यभाग्यः स्यादभावे हीनभाग्यवान् ॥

गर्गजातके—

हन्ति पुण्यं च भाग्यं च कर्म-पुण्यगतो नृणाम्। तुङ्गे स्वर्क्षे सहस्रांशुः पुष्कलं धर्ममादिशेत्॥
भाग्यमभाग्यं भवेद्धन्यः पितृपक्षपरायणः। धर्मे पूर्णो निशानाथः क्षीणः सर्वविनाशकृत्॥
कुजे रक्तपदानन्दी भवेत्पशुपतिव्रती। भाग्यहीनश्च सततं नरः पुण्यगृहं गते॥
मन्दभाग्यो बुधे पापे शुभे सौम्ये तु धार्मिकः। महाभाग्यः शुभे जीवे तथा शुक्रे बलीयसि॥
दण्डप्रदो वक्रगते नवमस्थे शनैश्वरे। स्वर्क्षोच्चगे शनौ भाग्ये राजा भवति धार्मिकः॥
राहौ धर्मगते जातः सत्यशौचविवर्जितः॥

अन्यत्र—

भाग्याधिपश्चेद्यदि केन्द्रवर्ती आदौ वयस्येव सुखी मनुष्यः।
त्रिकोणगः स्वोच्चगतोऽथवा स्यान्मध्ये वयस्यल्पफलप्रदः स्यात्॥ १॥
भाग्यस्य नाथे स्वगृहेऽथ मित्रगृहेऽथवा स्यात्स्वनवत्रिभागे।
भाग्योदयं तस्य वदन्ति तज्ज्ञाः शुभग्रहेन्द्रैश्च युतेक्षिते च॥ २॥
नीचस्थो वा शत्रुगेहस्थितो वा भाग्यस्वामी रिःफरन्ध्रारिगो वा।
पापैः खेटैः संयुतो वाऽथ दृष्टो भाग्यैर्हीनः स्याद्दरिद्रः सदैव॥ ३॥
नवमभावपती रिपुरन्ध्रगो नवमभं रिपुदृष्टयुतं तथा।
यदि तदा न च धर्मरतो नरः शुभखगैरथ धर्मरतो नरः॥ ४॥
अबलेऽपि शुभे खेटे भाग्यस्थे धार्मिको नरः।
शुभवर्गयुते भाग्ये शुभकर्मा यथाऽन्यथा॥ ५॥

इत्यादिचिन्ता विधेया। तत्राह जातकसारावलीकारः—

होरेन्दोर्बलयोगाद्यो दशमस्तत्स्वभावजं कर्म। तस्याधिपतेश्च तथा वृद्धिर्ज्ञेया तथा हानिः॥
दशमे नक्षत्रपतिर्लाभात्पुरुषस्य यस्य सम्भवति। सर्वारम्भो भवति हि विनिर्दिशेत्तस्य जातस्य॥

जातकसारे—

स्वस्थे खगे खलयुते खलजे नवांशे स्वोच्चर्क्षगे स्वभवने सुखवृत्तयः स्युः।
नीचारिभावगृहगेऽल्पसुखाल्पपुण्यो दासोपचारभृतकानुचरश्च दासः॥ १॥
धर्मभावे शुभक्षेत्रे शुभदृष्टे सुकर्मकृत्। पापेक्षिते पापकर्मा स्वामिदृष्टे तु मध्यमः॥२॥
वैद्याः पुरोहिताः शास्त्रस्मृतिज्ञा वञ्चका नराः। जायन्ते कर्मगैः पापैः सौम्यग्रहनिरीक्षितैः॥

वराहः—

'अर्थाप्तिः पितृपितृपत्निशत्रुमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः।
होरेन्द्वोर्दशमगतैर्विकल्पनीया मेन्द्वर्कास्पदपतिगांशनाथवृत्त्या॥

अर्कांशे तृणकनकोर्णभेषजाद्यैश्चन्द्रांशे कृषिजलजान्ननाश्रयाच्च ।
धात्वग्निप्रहरणसाहसैः कुजांशे सौम्यांशे लिपिगणितादिकाव्यशिल्पैः ॥
जीवांशे द्विजविबुधाकरादिधर्मैः काव्यांशे मणिरजतादिगोमहिष्यैः ।
सौरांशे श्रमवधभारनीचशिल्पैः कर्मेशाध्युषितनवांशकर्मसिद्धिः ॥
मित्रारिस्वगृहगतैस्ततस्ततोर्थान्तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात् ।
राज्याधीशे केन्द्रगे सौम्यदृष्टे पापे केन्द्रे सुप्रतापाभिधानः ।
जातो नित्यं भूमिपैः सेवनीयो भाग्यैर्युक्तः सुप्रतापप्रसिद्धः ॥ इति ।

अथ लाभस्थानेऽखिलानां वस्तूनां प्राप्तिचिन्ता विधेया तत्र होराप्रदीपे—

स्वस्वामिसद्ग्रहयुतेक्षित आयवर्गैः सद्धर्मको भवति वस्तुविशेषलाभः ।
क्रूरे च दृष्टिसहिते न च तत्र लाभस्तद्वर्गकेऽप्यथ च मिश्रफलं विधत्ते ॥ १ ॥
लाभे रवीक्षितयुते रविवर्गयुक्ते चौराचतुष्पदयुताच्च भवेत्प्रतापः ।
तद्वद्विधौ युवतितोयवनादिजातो भौमे सुवर्णमणिपावकशास्त्रजातः ॥ २ ॥
सौम्येक्षिते ह्यगत आयगृहे धनं स्याच्छिल्पादिकाव्यलिपिभिस्तुरगैः सकांस्यैः ।
जीवेक्षिताय गुरुवर्गयुताय गेहे यज्ञादिहेमहयनागरथादिमुख्यैः ॥ ३ ॥
शुक्रेक्षिताय शनिवर्गयुते महिष्यः लोहादिकृष्यवनकार्यभवा विवृद्धिः ।
नीचारिभार्कगखगोक्तफलं न दद्याद्दीप्तिग्रहोद्भवबले बलिनस्तु वाच्यम् ॥४॥इति॥

व्ययगृहान्निधनगृहाच्च मलिनकर्मणां चिन्ता विधेया । गर्गजातके—

क्षीणेऽब्जे वा रवौ रिःफे धनं पुंसामगाद्धरेत् । बहुधार्थक्षयो भौमे ह्यदृष्टेऽन्येषु सिद्धयः ॥१॥
नृपीडया च सन्तप्तं परिवादेन पीडितम् । नृशंसं पुरुषं चान्द्रिः कुरुते व्ययराशिगः ॥२॥
उच्छ्रितव्ययकारी च व्ययगे देवतागुरौ । श्रद्धाहीनो घृणाहीनो व्ययगे भार्गवे नरः ॥३॥
व्ययस्थानगते मन्दे क्रूरेषु कुरुते रुचिम् । व्यये राहौ नीचकर्मा कपटी कुलदूषकः ॥४॥
व्यये भावे स्वामियुक्ते शुभदृष्टे च सत्यपि। कीर्तिमान् जायते मर्त्यो विपरीते विपर्ययः ॥५॥

सुधीभिरिदं नियतं नियमेन ज्ञेयम् ॥ ३८ ॥

जिसके जन्मकालमें चतुर्थेश षष्ठ भाव में हो और शनि से युक्त हो तो सवारी से, राहु युक्त हो तो चौर से और केतु युक्त हो तो हथियार से उस मनुष्य की मृत्यु होती है। नवमस्थान से भाग्य सम्बन्धी विचार, दशमस्थान से राजा भूषण, वस्त्र, अश्व ( घोड़ा ) और उत्तम २ कार्य सम्बन्धी विचार, एकादशस्थान से सभी वस्तुओं का लाभ सम्बन्धी विचार और बारहवें तथा आठवें स्थान से पाप-कार्य सम्बन्धी विचार करना चाहिये ॥ ३८ ॥

लग्नस्थे रिःफनाथे भवति सुवचनो मानवो रूपवान्वा
स्वर्क्षे कार्पण्यबुद्धिर्बहुतरपशुमान् ग्रामयुक्तः सदा स्यात् ।
धर्मे तीर्थावलोकी बहुलवृषमतिः क्रूरयुक्ते च पापी
मिथ्याकोशान्तकृत्स्यान्नियतमिदमिति ज्ञेयमेवं सुधीभिः ॥ ३७ ॥

अ०—रिःफनाथे लग्नस्थे मानवः सुवचनः वा रूपवान्भवति । स्वर्क्षे सदा कार्पण्यबुद्धिर्बहुतरपशुमान् ग्रामयुक्तः स्यात् । धर्मे ( रिःफनाथे सति ) तीर्थावलोकी बहुलवृषमतिः ( स्यात् ) क्रूरयुक्ते च पापी मिथ्याकोशान्तकृत् स्यात्, इतीदं सुधीभिः एवं नियतं ज्ञेयम् ॥ ३७ ॥

लग्नस्थ इति । द्वादशभावाधिपे लग्नस्थे सति मानवः सुवचनः सुवाङ्माधुर्यो रूपवान्भवति । तथा स्वर्क्षे स्वगृहे सति कृपणबुद्धिः अनेकपशुयुक्तो ग्रामयुक्तश्च ग्रामाधिकारयुक्तश्च स्यात् । तथा धर्मे नवमे सति तीर्थावलोकी तीर्थयात्रावान्, बहुलवृषमतिः अत्यन्तधर्मबुद्धिश्च स्यात् । तथा पापग्रहयुक्ते सति पापी मिथ्याकोशान्तकृत् वृथा सञ्चितद्रव्यनाशकृत्स्यात् । अस्माद्योगान्नियतं फलं ज्ञेयम् ॥ ३७ ॥

यदि द्वादश स्थान का स्वामी लग्न में हो तो मनुष्य सुन्दर वचन बोलने वाला और सुन्दर स्वरूपवाला होता है । यदि द्वादश स्थान का स्वामी अपनी राशि में हो तो मनुष्य सदा कृपण ( कंजूस ) बुद्धिवाला तथा बहुत पशुओं ( गाय, भैंस, बैल, घोड़े, हाथी इत्यादि ) वाला होता है और बहुत ग्राम वाला भी होता है । रिःफेश नवम स्थान में हो तो तीर्थयात्रा करने वाला और धर्मकार्य में मन लगाने वाला होता है । यदि पापग्रह से युक्त हो तो पाप कार्य करने वाला व्यर्थ कोश ( खजाना ) को खर्च करने वाला होता है । ये योग सब इसी प्रकार बुद्धिमानों से जानने योग्य हैं ॥ ३७ ॥

अध्यायं समापयति शालिनीवृत्तेन—

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
भावाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तः शैलरामैः प्रणीतः ॥ ३८ ॥

इति जातकालङ्कारे द्वितीयोऽध्यायः ॥ २ ॥

---

अ०—हृद्यैः पद्यैः गुम्फिते सूरितोषेऽस्मिन् मञ्जुले अलङ्काराख्ये जातके ग्रन्थे श्रीगणेशेन वर्यैः शैलरामैः वृत्तैः युक्तः भावाध्यायः प्रणीतः ॥ ३८ ॥

हृद्यैरिति । श्रीगणेशेन भावाध्यायः शैलरामैर्वृत्तैः सप्तत्रिंशद्भिः श्लोकैरुक्तः ॥ ३८ ॥

इति हरभानुशुक्लविरचितायां श्रीजातकालङ्कारटीकायां भावफलाध्यायो द्वितीयः ॥ २ ॥

हृदय को प्रसन्न करने योग्य छन्दों से गुम्फित विद्वानों के प्रसन्नतार्थ इस मनोहर जातकालङ्कार ग्रन्थ में श्रीगणेशनामक कवि ने ३७ श्लोकों में इस दूसरे भावाध्याय की रचना की ॥ ३८ ॥

इति जातकालङ्कारे भावबोधिनी भाषाटीकायां भावाध्यायो द्वितीयः ॥ २ ॥

---

## अथ योगाध्यायः ॥ ३ ॥

तत्र तावत् शुभाशुभयोगान् व्याकृत्य योगान्तरं वक्तुं प्रतिजानीते शिखरिणीवृत्तेन—

ग्रहाधीना योगाः सदसदभिधाना जनिमतां
ततो योगाधीनं फलमिति पुराणैः समुदितम् ।
अतो वक्ष्ये योगान् सकलगणकानन्दजनकान्
शुकास्यादुद्भूतं मतमिति विलोक्येह रुचिरम् ॥ १ ॥

अ०—जनिमतां सदसदभिधाना योगाः ग्रहाधीनाः ततः फलं योगाधीनमिति पुराणैः समुदितम् । अतः इह शुकास्यादुद्भूतं रुचिरं मतं विलोक्य सकलगणकानन्दजनकान् योगान् वक्ष्ये ॥ १ ॥

ग्रहाधीना इति । पुराणैर्वसिष्ठशुकपराशरप्रभृतिभिः प्रोक्तं फलं योगाधीनम्, अतः सकलगणकानन्दजनकान् अशेषज्योतिर्विदां प्रीत्युत्पादकान् योगान्वक्ष्ये । किं कृत्वा शुकास्यात् शुकमुनिमुखादुद्भूतं रुचिरं शोभनं मतं विलोक्य आलोच्य ॥१॥

जन्म लेनेवाले मनुष्यों के शुभाशुभ योग ग्रहों के अधीन हैं और शुभाशुभ फल योगाधीन है ऐसा प्राचीनांचार्यों ने कहा है । इसलिये शुकदेव जी के मुखारविन्द से निकले हुये मनोहर मत को देखकर समस्त दैवज्ञों को आनन्द देने वाले योगों को कहता हूँ ॥ १ ॥

अथानिष्टयोगानाह—

ऋक्षेशः क्षीणवीर्यः सुतनवमगतो मानवो मन्युमान्वै
राशीशे साङ्गनाथे रिपुनिधनगृहे प्रान्त्यगे दुर्बलः स्यात् ।
धर्मद्वेष्याष्टनाथाः खलखचरयुताः स्थानके कापि संस्था-
स्तैर्दृष्टाः स्यात्तदानीं परपुरुषरता सुन्दरी तस्य पुंसः ॥ २ ॥

अ०—ऋक्षेशः क्षीणवीर्यः सुतनवमगतो वै मानवः मन्युमान् स्यात् । साङ्गनाथे राशीशे रिपुनिधनगृहे प्रान्त्यगे दुर्बलः स्यात् । धर्मद्वेष्याष्टनाथाः खलखचरयुताः कापि स्थानके संस्थिताश्चेत् तैः दृष्टाः तदानीं तस्य पुंसः सुन्दरी परपुरुषरता स्यात् ॥ २ ॥

ऋक्षेश इति । ऋक्षेशो जन्मराशिनाथः क्षीणबलः सन् त्रिकोणगतश्चेत्तदा मानवो

जातः मन्युमान् क्रोधी स्यात्। जन्मराशीशे साङ्गनाथे तनुपतिसहिते त्रिकस्थे दुर्बलः स्यात्। यस्य नवमषष्ठाष्टमेशाः क्रूरग्रहदृष्टियुक्ता यत्र कुत्रापि स्थिताः यदि तदानीं तस्य भार्या जारगामिनी स्यात् ॥ २ ॥

जिसके जन्म काल में जन्म राशि का स्वामी बलहीन होकर पञ्चम या नवम स्थान में हो वह मनुष्य क्रोधी होता है। यदि जन्म राशि का स्वामी लग्नेश से युक्त होकर षष्ठ या अष्टम या द्वादश स्थान में हो वह मनुष्य दुर्बल (बलहीन) होता है। नवमेश षष्ठेश और अष्टमेश पापग्रह से युक्त या दृष्ट होकर किसी भी स्थान में हो तो उस मनुष्य की स्त्री अन्य पुरुष से प्रेम करने वाली होती है अर्थात् व्यभिचारिणी होती है ॥ २ ॥

परजातयोगः—

मातृस्थाने स्थितौ चेत्कुजविधुसहितौ षष्ठरन्ध्राधिनाथौ
स्यातां यस्य प्रसूतौ भवति खलु नरस्त्वन्यजातस्तदानीम्।
क्वापि स्थाने स्थितौ स्तः कलुषखगयुतौ भाग्यषष्ठाधिनाथौ
चेदेवं राहुणा वा तदनु च शिखिना सँय्युतावन्यजातः ॥ ३ ॥

अ०—यस्य प्रसूतौ षष्ठरन्ध्राधिनाथौ कुजविधुसहितौ मातृस्थाने स्थितौ स्याताम्, तदानीं तु नरः अन्यजातः भवति। भाग्यरन्ध्राधिनाथौ कलुषखगयुतौ क्वापि स्थाने स्थितौ एवं चेद्राहुणा वा तदनु शिखिना संयुतौ तदानी मन्यजातः स्यात् ॥ ३ ॥

मातृस्थान इति। यस्य जन्मनि षष्ठाष्टमभवननाथौ कुजविधुयुतौ चतुर्थस्थौ स्यातां तदानीं स नरः अन्यजातः जारजातः। तथा नवमषष्ठाधिनाथौ यत्र कुत्रापि स्थितौ क्रूरग्रहयुतौ अथवा केवलेन राहुणा शिखिना वा युतौ स्यातां तदान्यजातः। कलुषखगयुतावित्यनेन राहुकेतुरपि सर्वक्रूरयोगे विवक्षितः। अग्रिमश्लोके मन्दादीनां पार्थक्येन योगोपदेशात् कलुषखगयुतावित्यनेनैव सिद्धे राहुकेतुग्रहणं छन्दोऽनुरोधात् ॥ ३ ॥

जिस के जन्मकाल में षष्ठेश तथा अष्टमेश मङ्गल और चन्द्रमा से युक्त होकर चतुर्थ भाव में हों वह मनुष्य परजात (अपने पिता से अतिरिक्त पुरुष से पैदा) होता है। नवमेश तथा षष्ठेश पापग्रह से युक्त होकर किसी भी स्थान में हों राहु वा केतु से युक्त होकर किसी भी स्थान में हो तो मनुष्य दूसरे का जन्मा होता है ॥ ३ ॥

युक्तौ मन्देन शूद्रादथ भवति विदा वैश्यतो भास्करेण
तद्वज्जातः सितेन त्रि[illegible]भूमिदेवात्प्रसूतः।

दैत्येशेज्यौ सपापौ मदनरिपुधनस्थानगौ चेत्परस्त्री-
गामी व्योमारिपौ स्तो गगनभवनगौ तत्पिताऽन्यारतः स्यात् ॥४॥

अ०—यदि ( भाग्यषष्ठाधिनाथौ ) मन्देन युक्तौ ( तदा ) शूद्रात् (जातः भवति) अथ विदा वैश्यतो, भास्करेण क्षत्राज्जातः। सितेन त्रिदशपगुरुणा 'च' भूमिदेवात् प्रसूतः। दैत्येशेज्यौ सपापौ मदनरिपुधनस्थानगौ चेत्तदा परस्त्रीगामी स्यात्। व्योमारिपौ गगनभवनगौ चेत्तदा तत्पिता अन्यारतः स्यात् ॥ ४ ॥

युक्ताविति। भाग्यषष्ठाधिनाथौ मन्देन युक्तौ शूद्राज्जातः उत्पन्नो भवति। अथ बुधयुक्तौ वैश्याज्जातः। भास्करेण युतौ चेत्क्षत्रियाज्जातः। गुरुशुक्राभ्यां ब्राह्मणाज्जातः। बुधगुरुशुक्राणां कलुषखगयुतत्वे क्रूरदृष्टत्वे तद्योगेन नीचत्वेनास्तंगतत्वेन क्रूरवर्गस्थत्वेन वा सुधीभिर्बोध्यम्। अथ शुक्रबृहस्पती सक्रूरौ सप्तमषष्ठधनस्थानगतौ चेत्तदा परस्त्रीगामी स्यात्। दशमषष्ठाधिपौ दशमस्थौ तदा तत्पिता जातस्य पिता अन्यारतः स्यात्परस्त्रीगामी स्यात् ॥ ४ ॥

यदि नवमेश तथा षष्ठेश शनि से युक्त हों तो शूद्र से, बुध से युक्त हों तो वैश्य से, सूर्य से युक्त हों तो क्षत्रिय से, गुरु और शुक्र से युक्त हों तो ब्राह्मण से जातक उत्पन्न होता है। यदि शुक्र और बृहस्पति पाप ग्रह से युक्त हो कर सप्तम षष्ठ या द्वितीय स्थान में हों तो मनुष्य पर-स्त्री-गामी होता है। दशमेश और षष्ठेश दोनों यदि दशम स्थान में हों तो उस जातक का पिता पर-स्त्री-गामी होता है ॥ ४ ॥

मूर्तीशः पापयुक्तो धनसदनगतश्चेत्तदा सज्जनस्त्री-
संयुक्तस्तत्पिता स्यात्खलविहगयुताः कामशत्रुस्वनाथाः।
कोशस्थास्तद्वदेवं फलमिति विविधं भ्रातृपत्न्योश्च पित्रोः
स्थानेशाः क्वापि भावे तनुपतिसहिताश्चेत्पुमानन्यजातः॥ ५ ॥

अ०—पापयुक्तः मूर्तीशः धनसदनगतश्चेत्तदा तत्पिता सज्जनस्त्रीसंयुक्तः स्यात्। काम-शत्रु-स्वनाथाः खलविहगयुताः कोशस्थास्तद्वत् विविधं फलं ज्ञेयम्। एवं भ्रातृपत्न्योः पित्रोश्च स्थानेशाः तनुपतिसहिताः क्वापि भावे स्थिताश्चेत्तदा पुमानन्यजातः स्यात् ॥ ५ ॥

मूर्तीश इति। क्रूरयुक्तो लग्नेशः द्वितीयस्थश्चेत्पिता सज्जनस्त्रीसंयुक्तः साधुजनस्त्रीगामी स्यात्। सप्तमषष्ठद्वितीयभावेशाः क्रूरयुताः द्वितीयस्थाश्चेत्तद्वदेव फलं विविधमित्येवं प्रकारैर्विविधफलमिति ज्ञेयम्। सज्जनस्त्रियाश्रक्रिदुराचारत्वमभक्ष्यभक्षकत्वमित्यादि ज्ञेयमिति भावः। तृतीयसप्तमचतुर्थदशमेशास्तनुपतिसहिता यत्र कुत्रापि स्थिताश्चेज्जातः पुमान् जारजातः स्यात् ॥ ५ ॥

लग्नेश पाप ग्रह से युक्त होकर द्वितीय भाव में हो तो उस जातक का पिता किसी सच्चरित्र की स्त्री से समागम करता है। सप्तमेश षष्ठेश और द्वितीयेश पाप ग्रह से युक्त होकर द्वितीय भाव में हों तो भी पूर्वोक्तानुसार फल कहना चाहिये। अर्थात् उस का पिता किसी सच्चरित्र की स्त्री से समागम करता है। और भी अनेक प्रकार दुराचरण भक्ष्याभक्ष्यादि फल होता है। इसी तरह तृतीयेश, सप्तमेश, चतुर्थेश, और दशमेश लग्नेश से युक्त होकर किसी भी स्थान में हो तो जातक परजात होता है ॥५॥

लग्नाधीशेन्दुपुत्रौ क्षितितनयनिशानायकौ क्वापि संस्थौ
युक्तौ स्वर्भानुना वा भवति हि मनुजः केतुना श्वेतकुष्ठी।
आदित्यो भौमयुक्तस्तदनु शनियुतो रक्तकृष्णाख्यकुष्ठी
सार्को लग्नाधिनाथो व्ययरिपुनिधनस्थानगस्तापगण्डः ॥ ६ ॥

अ०—लग्नाधीशेन्दुपुत्रौ क्षितितनय-निशानायकौ, स्वर्भानुना केतुना वा युक्तौ क्वापि संस्थौ हि मनुजः श्वेतकुष्ठी भवति। आदित्यो भौमयुक्तः तदनु (आदित्यः) शनियुतः रक्तकृष्णाख्यकुष्ठी (भवति)। सार्कौ लग्नाधिनाथो व्यय-रिपु-निधनस्थानगस्तापगण्डः स्यात् ॥ ६ ॥

लग्नाधीश इति। लग्नेशबुधौ कुजचन्द्रौ वा राहुकेत्वोरन्यतरयुतौ तदा जातः श्वेतवर्णोपलक्षितकुष्ठरोगी भवति। तदनु भौमशनियुतः आदित्यश्चेद्रक्तवर्णकृष्णवर्णनामकः कुष्ठवान् स्यात्। सूर्ययुतो लग्नेशः त्रिकस्थश्चेत्तदा जातस्य तापगण्डान्वितो गण्डो रोगविशेषः स्यात् ॥ ६ ॥

लग्नेश और बुध अथवा मंगल और चन्द्रमा राहु या केतु से युक्त होकर किसी भी स्थान में हों तो मनुष्य श्वेत (सफेद) कुष्ठ से युक्त होता है। सूर्य मङ्गल से युक्त होकर या सूर्य शनि से युक्तहोकर किसी भी स्थान में हो तो मनुष्य रक्त(लाल) कुष्ठवाला होता है। लग्नेश यदि सूर्य से युक्त होकर द्वादश, षष्ठ या अष्टमस्थान में हो तो मनुष्य को तापगण्ड नामक रोग होता है ॥ ६ ॥

ज्ञेयश्चन्द्रेण गण्डो जलज इह युतो ग्रन्थिशस्त्रव्रणः स्याद्
भूमीपुत्रेण पित्तं हिमकरतनयेनाथ जीवेन रोगः।
आमोद्भूतस्ततश्चेद्भृगुतनययुतो नुः क्षयाख्यो गदः स्या-
च्चौरोद्भूतोऽन्त्यजाद्वा यमशिखितमसामेकयुक् तन्वधीशः ॥७॥

अन्वयः—चन्द्रेण युतः (लग्नेशः) इह जलजो गण्डः ज्ञेयः। भूमीपुत्रेण युतः (लग्नेशः त्रिकस्थः) ग्रन्थिशस्त्रव्रणः स्यात्। हिमकरतनयेन पित्तं, अथ जीवेन (युतः) आमोद्भूतः रोगः स्यात्। ततश्चेद् भृगुतनययुतो (लग्नेशस्त्रिके) तदा नुः क्षयाख्यो गदः स्यात्। यम-शिखि-तमसामेकयुक् तन्वधीशः चौरोद्भूतोऽन्त्यजाद्वा रोगः स्यात् ॥७॥

ज्ञेय इति । चन्द्रेण युतो लग्नेशः त्रिकस्थश्चेज्जलजो गण्डः स्यात् । भौमयुतो लग्नेशः त्रिकस्थश्चेत्तदा ग्रन्थिशस्त्रव्रणः स्यात् । ग्रन्थ्युपलक्षितः शस्त्रजो व्रणः स्यादित्यर्थः । बुधयुतो लग्नेशः त्रिकस्थश्चेत्पित्तरोगः स्यात् । जीवेन युतो लग्नेशः त्रिकस्थश्चेत्तदा आमोद्भूतः आमकोपजो रोगः स्यात् । शुक्रेण युतस्तत्र स्थितो लग्नेशस्तदा त्वर्मनुष्यस्य क्षयाख्यो रोगः स्यात् । यमशिखितमसामेकयुक् शनिराहुकेतूनां मध्ये एकेन युक्तो लग्नेशः त्रिकस्थश्चेत्तदा चौरजोऽन्त्यजादुत्पन्नो वा रोगः स्यात् । रजकचर्मकारादयोऽन्त्यजाः ॥ ७ ॥

लग्नेश चन्द्रमा से यु होकर त्रिक ( ६।८।१२ ) में हो तो जातक को जल से उत्पन्न गण्डनामक रोग होता है । मङ्गल से युक्त लग्नेश त्रिक में हो तो मनुष्य को ग्रन्थि (गठिया या वातव्याधि) रोग तथा शस्त्र (हथियार) से व्रण (घाव) होता है। यदि लग्नेश बुध से युक्त हो तो पित्त रोग, गुरु से युक्त हो तो आमरोग (आमांशा) और शुक्र से युक्त हो तो क्षय रोग होता है । यदि शनि केतु या राहु से युक्त लग्नेश हो तो चोर से या अन्त्यजों ( चाण्डालों ) से उत्पन्न रोग होता है ॥ ७ ॥

चन्द्रो मेषे वृषे वा कुजशनिसहितः श्वेतकुष्ठी सरोगो
दैत्येज्यारेन्दुमन्दास्तिमिभवनगताः कर्कटालिस्थिता वा ।
अङ्गे सौख्येन हीनः परमकलुषकृद्रक्तकुष्ठी नरः स्या-
द्वागीशो भार्गवो वा यदि रिपुगृहपो मूर्तिगः क्रूरखेटैः ॥ ८ ॥
दृष्टश्चेद्वक्त्रशोफी त्वथ खलसहिता मीनकर्कालिभावा
लूताकारश्चिरं स्यात्परमगदकरः कुष्ठ एवं नराणाम् ।
रिःफस्थानस्थितश्चेद्विबुधपतिगुरुर्गुह्यरोगी नितान्तं
भूमीमार्तण्डपुत्रौ व्ययभवनगतौ शत्रुगौ वा व्रणी स्यात् ॥ ९ ॥

अन्वयः—कुजशनिसहितश्चन्द्रः मेषे वा वृषे ( तदा ) श्वेतकुष्ठी सरोगः स्यात् । दैत्येज्यारेन्दुमन्दास्तिमिभवनगताः वा कर्कटालिस्थिताः ( तदा ) नरः अङ्गे सौख्येन हीनः परमकलुषकृद्रक्तकुष्ठी स्यात् । यदि वागीशः भार्गवः वा रिपुगृहपः क्रूरखेटैर्दृष्टः मूर्तिगश्चेत्तदा वक्त्रशोफी स्यात् । अथ मीनकर्कालिभावाः खलसहिताः ( चेत्तदा ) नराणां लूताकारः एवं परमगदकरः कुष्ठः चिरं स्यात् । विबुधपतिगुरुः रिःफस्थानस्थितश्चेत्तदा नितान्तं गुह्यरोगी स्यात् । भूमीमार्त्तण्डपुत्रौ व्ययभवनगतौ वा शत्रुगौ तदा व्रणी स्यात् ॥ ८–९ ॥

चन्द्र इति । कुजशनियुतश्चन्द्रो मेषे वृषे वा यदि तदा नरः श्वेतकुष्ठी स्यात् । शुक्रभौमेन्दुशनयो मीनराशिस्था यद्वा कर्कटवृश्चिकस्थाः तदा नरः शरीरसौख्यर-

क्षितः महापातकी रक्तकुष्ठी स्यात् । गुरुः शुक्रो वा षष्ठभावाधिपः क्रूरैर्दृष्टो लग्नस्थश्चेत्तदा वक्त्रशोफी मुखाभिकरणकश्वयथुरोगयुतः स्यादित्यग्रिमश्लोकेन सम्बन्धः ॥८॥

दृष्ट इति । अथ मीनकर्कवृश्चिकराश्युपलक्षिता भावाः क्रूरसहिता यदि तदा नराणामेवं प्रकारेण चिरं कुष्ठं स्यात् । तत्र प्रकारमाह । यत्र लूताकारकः सविशेषो जन्तुविशेषः तत्कष्टगदविशेषकरः लूताकारकक्तकुष्ठः स्यादित्यर्थः । गुरुर्व्ययस्थश्चेन्नरः गुह्यरोगी, यद्वा वैधाज्ञानरोगी स्यात् । भौमशनी व्यये षष्ठे वा स्यातां तदा व्रणी व्रणयुतः स्यात् ॥ ९ ॥

मङ्गल और शनि से युक्त होकर चन्द्रमा मेष या वृष में हो तो मनुष्य श्वेत-कुष्ठी होता है। शुक्र, मङ्गल, चन्द्रमा और शनि मीन कर्क या वृश्चिक राशि में हो तो मनुष्य शरीर सुख से विमुख पाप कर्म करने वाला और रक्त कुष्ठ से युक्त होता है। यदि बृहस्पति शुक्र या षष्ठेश पापग्रह से दृष्ट होकर लग्न में हों तो मनुष्य के मुख में शोफ ( अर्थात् सूजन ) रोग होता है। मीन कर्क और वृश्चिक राशियां पाप ग्रह से युक्त होकर किसी भी भाव में हों तो मनुष्य को लूताकार ( मकड़ी जाल की तरह ) कठिन कुष्ठ रोग बहुत दिनों के लिये होता है। यदि बृहस्पति द्वादश स्थान में हो तो मनुष्य बहुत कठिन गुप्त रोग वाला होता है। मङ्गल और शनि द्वादश या षष्ठ स्थान में हो तो मनुष्य को व्रण ( घाव ) होता है ॥८-९॥

मेषे मीने कुलीरे तदनु च मकरे वृश्चिके मन्दचन्द्रौ
स्यातां क्रूरान्वितौ चेन्नवमभवनगौ मानवः स्याच्च खञ्जः ।
लग्नस्थं पश्यतीन्दुं दिनमणितनयं भूमिजो द्यूनदृष्ट्या
बुद्ध्या हीनो नरः स्यादिनविधुविवरे भूमिजश्चेत्तथैव ॥ १० ॥

अन्वयः—क्रूरान्वितौ मन्द-चन्द्रौ मेषे मीने कुलीरे तदनु च मकरे वृश्चिके नवमभवनगौ चेत्तदा मानवः खञ्जः स्यात् । भूमिजः द्यूनदृष्ट्या लग्नस्थं इन्दुं दिनमणितनयं पश्यति तदा नरः बुद्ध्या हीनः स्यात् । भूमिजश्चेदिन-विधुविवरे तथैव ( बुद्ध्या हीनः नरः स्यात् ) ॥ १० ॥

मेषे इति । क्रूरग्रहयुतौ चन्द्रशनी मेषमीनकर्कमकरवृश्चिकान्यतमराशिगतौ नवमभवनगौ चेन्मानवो जातः खञ्जः भञ्जाख्यपादरोगी स्यात् । भूमिपुत्रः सप्तमदृष्ट्या लग्नस्थं चन्द्रं शनिं च पश्यति चेत्तदा नरः बुद्ध्या हीनः स्यात् । इन-विधुविवरे रविचन्द्रयोर्मध्ये भौमश्चेत्तथैव बुद्धिहीनः स्यात् । इनशब्दो लक्षणया दिनकरपरो ज्ञेयः ॥ १० ॥

पाप ग्रह से युक्त शनि और चन्द्रमा मेष, मीन, कर्क, मकर, या वृश्चिक राशि में होकर नवम स्थान स्थित हो तो जातक खञ्ज ( पांव से लंगड़ा ) होता है। यदि

लग्नस्थ चन्द्रमा और शनि को सप्तम दृष्टि से मङ्गल देखता हो तो मनुष्य बुद्धि से हीन ( मूर्ख ) होता है। यदि सूर्य और चन्द्रमा के बीच में मङ्गल पड़े तो मनुष्य बुद्धि हीन होता है ॥ १० ॥

प्रालेयांशौ तनुस्थे गगनसदनगे साधिकारेऽर्कसूनौ
दृष्टेऽस्मिन्कामदृष्ट्या हिमकिरणभुवा बुद्धियुङ्मानवः स्यात्।
पृथ्वीसूनुं मृगाङ्कं तनुनिलयगतं पूर्णदृष्ट्येन्दुसूनुः
पश्येच्चेद्बुद्धिहीनस्त्वथ शशितनुपौ भूभुवा पीडितौ वा ॥ ११ ॥

अन्वयः—प्रालेयांशौ तनुस्थे, साधिकारे अर्कसूनौ गगनसदनगे अस्मिन् हिमकरणभुवा कामदृष्ट्या दृष्टे ( तदा ) मानवः बुद्धियुक् स्यात्। तनुनिलयगतं पृथ्वीसूनुं मृगाङ्कं इन्दुसूनुः पूर्णदृष्ट्या चेत्पश्येत्तदा बुद्धिहीनः ।स्यात्। अथ शशि–तनुपौ भूभुवा पीडितौ वा बुद्धिहीनः स्यात् ॥ ११ ॥

प्रालेयांशाविति। चन्द्रे लग्ने साधिकारे गृहहोराद्रेष्काणादिवर्गाधिपत्यसहिते शनौ दशमस्थे बुधेन पूर्णदृष्टेऽस्मिन्मानवो जातः बुद्धिमान् स्यात्। लग्नस्थं भौमं चन्द्रं च पूर्णदृष्ट्या बुधः पश्येत् चेद्बुद्धिहीनः स्यात्। यद्वा चन्द्रलग्नेशौ भौमेन पूर्णदृष्ट्या पीडितौ बुद्धिहीनः स्यात् ॥ ११ ॥

चन्द्रमा लग्न में हो और अपने अधिकार ( गृह होरा द्रेष्काण नवांश द्वादशांश त्रिंशांश ) से युक्त शनि दशम स्थान में हो तथा बुध की पूर्ण दृष्टि से दृष्ट हो तो मनुष्य बुद्धिमान् होता है। लग्न स्थित मङ्गल और चन्द्रमा को बुध पूर्ण दृष्टि से देखता हो तो मनुष्य बुद्धिहीन होता है। यदि चन्द्रमा और लग्नेश मङ्गल की पूर्ण दृष्टि से दृष्ट हो तो मनुष्य बुद्धिहीन होता है ॥ ११ ॥

लग्नस्थे रौहिणेये तदनु रविशनी क्रूरदृष्टौ रिपुस्था-
वेकर्क्षे चैकभागे भवति गतमतिर्दृष्टिहीनौ शुभानाम्।
तिग्मांशौ वैरिनाथे खलविहगयुते तुर्यगे सूर्यसूनौ
हृद्रोगी वाक्पतौ वा भवति हृदि नरः कृष्णपित्ती सकम्पः ॥१२॥
दुष्टैर्वा पीडितः सन्नथ कुजरविजौ वाक्पतिर्बन्धुसंस्था
हृद्रोगः स्यान्नराणां व्रण इह नियतं क्लेशकारी शरीरे।
पातालस्थो महीजस्तनयनिलयगाः सूर्यवित्सैंहिकेया
रन्ध्रस्थो भानुपुत्रो यदि जनुषि तदा स्यान्नरो दुःखभागी ॥ १३ ॥

अन्वयः—लग्नस्थे रौहिणेये तदनु रविशनी एकर्क्षे एकभागे क्रूरदृष्टौ रिपुस्थौ शुभानां दृष्टिहीनौ गतमतिर्भवति। वैरिनाथे तिग्मांशौ खलविहगयुते तुर्यगे ( चेत्तदा ) हृद्रोगी स्यात्। सूर्यसूनौ वा वाक्पतौ ( क्रूरदृष्टौ रिपुस्थौ क्रूरसहितौ

चतुर्थस्थौ वा ) तदा नरः हृदि कृष्णपित्ती भवति। दुष्टैर्वा पीडितो हृदि सकम्पो भवति। अथ कुज-रविजौ वाक्पतिश्च बन्धुसंस्थाः ( चेत्तदा ) इह नराणां शरीरे नियतं हृद्रोगः स्यात्, क्लेशकारी व्रणश्च स्यात्। यदि जनुषि महीजः पातालस्थः, सूर्यवित्सैंहिकेयाः तनयनिलयगाः भानुपुत्रः रन्ध्रस्थः तदा नरः दुःखभागी स्यात्॥ १२-१३॥

लग्नस्थ इति। लग्नस्थे बुधे तदनु क्रूरग्रहदृष्टौ शुभग्रहदृष्टिरहितौ रविशनी एकराशौ अथवा एकभागे चक्रस्य पूर्वार्द्धे परार्द्धे वा एकत्रगौ षष्ठस्थौ चेत्तदा गतमतिर्नष्टमतिः स्यात्। षष्ठभावनाथे सूर्ये क्रूरग्रहयुते तुर्यगे सति हृद्रोगी स्यात्। शनौ गुरौ वा षष्ठे क्रूरसहिते तुर्यस्थे हृदि कृष्णपित्तरोगी स्यात्। अथवा दुष्टैः पीडितो हृदि सकम्पः स्यात्॥ १२॥

दुष्टैर्वेति। अथ कुजः सूर्यजो गुरुश्च चतुर्थस्था यदि तदा इहास्मिन् योगे हृद्रोगाद्धेतोर्नराणां शरीरे क्लेशकारी व्रणः नियमेन स्यात्। यदा जन्मसमये भौमश्चतुर्थस्थः सूर्यबुधराहवः पञ्चमस्थाः शनिः अष्टमस्थस्तदा जातो नरो दुःखभागी भवति॥ १३॥

बुध लग्न में हो तथा पाप ग्रह की दृष्टि से दृष्ट और शुभग्रह की दृष्टि से रहित होकर सूर्य और शनि एक राशि के एक ही अंश में होकर षष्ठ स्थान में हों तो मनुष्य की बुद्धि नष्ट हो जाती हैं। षष्ठेश सूर्य पापग्रह से युक्त होकर चतुर्थ स्थान में हो तो मनुष्य हृदयरोग वाला होता है। शनि या बृहस्पति पाप ग्रह से युक्त या दृष्ट होकर षष्ठ या चतुर्थ स्थान में हो तो मनुष्य के हृदय में कृष्ण पित्त नामक रोग होता है। या दुष्टों से पीड़ित होने से कम्प रोग होता है। मंगल और शनि तथा बृहस्पति चतुर्थ स्थान में हों तो मनुष्य को निश्चय करके शरीर में हृदय रोग और बड़ा कष्ट दायक व्रण ( घाव ) होता है। यदि जन्मकाल में मंगल चतुर्थ स्थान में सूर्य बुध राहु पञ्चम स्थान में और शनि अष्टम स्थान में हो तो मनुष्य दुःख भोगने वाला होता है॥ १२-१३॥

लग्नं पश्येन्निजर्क्षे यदि धरणिसुतः संस्थितः कातरः स्या-
च्छायासूनुर्नभःस्थो यदि निशि जननं तद्वदत्रापि वाच्यम्।
मूर्तौ भूमीतनूजे स्वजनकलहकृद् द्यूनगे स्वाधिकारा-
द्धीने भौमे वपुष्मान् परमयुधि रतस्तीक्ष्णभानुश्च नूनम्॥१४॥

अ०—यदि निजर्क्षे संस्थितः धरणिसुतः लग्नं पश्येत्तदा कातरः स्यात्। यदि छायासूनुः नभःस्थो निशि जननं तदा तद्वदत्रापि वाच्यम्। भूमीतनूजे मूर्तौ ( तदा ) स्वजनकलहकृत् ( स्यात् )। स्वाधिकाराद्धीने भौमे द्यूनगे तदा नूनं वपुष्मान् परमयुधि रतः तीक्ष्णभानुश्च स्यात्॥ १४॥

लंग्नमिति। स्वक्षेत्रस्थितो भौमो यदि लग्नं पश्येत्तदा जातः कातरः भीरुः स्यात्। यदि शनिर्दशमस्थो रात्रौ जन्म चेदत्रापि तद्वद्वाच्यं कातरः स्यादित्यर्थः। लग्नगे भौमे स्वजनकलहकरः स्यात्। स्वाधिकाराद्धीने स्वगृहहोराद्रेष्काणादिरहिते सप्तमे भौमे वपुष्मान् दृढशरीरः अत्यन्तयुद्धप्रीतिमान् तीक्ष्णस्वभावश्च स्यात् नूनं निश्चयेन ॥ १४ ॥

जिसके जन्मकाल में मंगल अपनी राशि में स्थित होकर लग्न को देखता हो वह मनुष्य कायर होता है। यदि दशम स्थान में शनि हो और रात्रि में जन्म हो तो मनुष्य कायर होता है। जिसके लग्न में मंगल हो वह मनुष्य अपने सम्बन्धियों से लड़ाई करने वाला होता है। अपने अधिकार (गृह, होरा, मूलत्रिकोणादि) से हीन होकर मंगल सप्तम में हो तो मनुष्य अत्यन्त हृष्ट पुष्ट शरीर वाला युद्धप्रिय और कठोर स्वभाव वाला होता है ॥ १४ ॥

पश्येतां कामदृष्ट्या धरणिविधुसुतौ चेन्मिथः स्यात्तदानी-
मुच्चाकारोऽथ चन्द्रं शनिरविमहिजाश्चेत्प्रपश्यन्ति शीतः।
क्षीणे प्रालेयभानौ धरणिजसहिते पापभूमिः खरः स्या-
न्मूर्तिस्थो द्यूनदृष्ट्या हिमकरतनयो वासवेज्यं प्रपश्येत् ॥ १५ ॥
हास्यासक्तः सभौमे हिमकरतनये स्याच्छुभर्क्षे कुजर्क्षे
मन्दर्क्षे वाऽर्कदृष्टौ नरपतिविदुषां रञ्जने कोविदः स्यात्।
पश्येत्काव्यं सितांशुर्व्ययविलयरिपुस्थानगो विस्मयालुः
क्षिप्रं वाक्स्फूर्तिमान् स्यात्कुजबुधशशिनो वीर्यवत्खेटदृष्टाः ॥१६॥

अ०—धरणि–विधु–सुतौ कामदृष्ट्या चेन्मिथः पश्येतां तदानीं उच्चाकारः पुरुषः स्यात्। अथ चन्द्रं चेत् शनि–रवि–महिजाः प्रपश्यन्ति तदा शीतः स्यात्। क्षीणे प्रालेयभानौ धरणिजसहिते पापभूमिः खरः स्यात्। मूर्तिस्थो हिमकरतनयो वासवेज्यं प्रपश्येत्तदा हास्यासक्तः स्यात्। सभौमे हिमकरतनये शुभर्क्षे, वा कुजर्क्षे मन्दर्क्षे अर्कदृष्टौ तदा नरपतिविदुषां रञ्जने कोविदः स्यात्। व्यय–विलय–रिपुस्थानगः सितांशुः काव्यं पश्येत्तदा विस्मयालुः स्यात्। कुज–बुध–शशिनो वीर्यवत्खेटदृष्टाः क्षिप्रं वाक्स्फूर्तिमान् स्यात् ॥ १५–१६ ॥

क्षीण इति। धरणिविधुसुतौ भौमबुधौ मिथश्चान्योन्यं सप्तमदृष्ट्या पश्येतां तदानीं जात उच्चशरीरः स्यात्। अथ शनिरविभौमाश्चन्द्रं पश्यन्ति तदा जातः शीतलस्वभावः स्यात्। शीतलत्वं जडत्वं मूर्खत्वमित्यर्थः। क्षीणे चन्द्रे भौमसहिते पाप-

भूमिः पापकृत् , खरस्तीक्ष्णस्वभावः स्यात् । मूर्तिस्थो बुधः सप्तमस्थं गुरुं पश्येत्तदा जातो हास्यासक्त इत्यग्रिमश्लोकेन सम्बन्धः ॥ १५ ॥

हास्यासक्त इति । अथ भौमसहिते बुधे शुभर्क्षे शुभग्रहराशौ यदा कुजज्ञौ सूर्यदृष्टौ मन्दराशिस्थौ तदा राज्ञां विदुषां च रञ्जने हर्षोन्मुखीकरणे प्रवीणः स्यात् । त्रिकस्थः चन्द्रः शुक्रं पश्येत्तदा विस्मयालुः विस्मययुक्तः स्यात् । कुजबुधेन्दवो बलिष्ठग्रहदृष्टाश्चेच्छीघ्रं यथा स्यात्तथा वचनस्फूर्तियुक्तः स्यात् ॥ १६ ॥

जिसके जन्मकाल में मंगल और बुध परस्पर सप्तम दृष्टि से देखते हों वह मनुष्य उच्च आकृति ( लम्बा शरीर ) वाला होता है । शनि सूर्य और मंगल ये सब यदि चन्द्रमा को देखते हों तो मनुष्य शीत प्रकृति ( मन्द स्वभाव ) वाला होता है । क्षीण चन्द्रमा यदि मंगल के सहित हो तो मनुष्य महापापी और क्रोधी होता है । बुध लग्न में स्थित होकर सप्तम दृष्टि से बृहस्पति को देखता हो तो मनुष्य हास्यप्रिय होता है । मंगल के सहित बुध शुभ राशि में हो या मंगल और बुध शनि की राशि ( मकर कुम्भ ) में सूर्य की दृष्टि से युक्त हो तो मनुष्य राजाओं और विद्वानों को प्रसन्न करने में प्रवीण ( चतुर ) होता है । द्वादश अष्टम और षष्ठ स्थान स्थित चन्द्रमा यदि शुक्र को देखता हो तो मनुष्य विस्मयालु ( आश्चर्य करनेवाला ) होता है । इसी तरह मंगल बुध और चन्द्रमा यदि किसी बली ग्रह से दृष्ट हों तो मनुष्य शीघ्र बोलने वाला होता है ॥ १५-१६ ॥

शुक्रज्ञौ द्यूनयातौ गगनविलयगौ मानवः पुंश्चलः स्यात्
कामाज्ञामन्दिरस्थौ कविधरणिसुतौ तद्वदाज्ञाम्बुयातौ ।
काव्यारौ तद्वदिन्दोर्नभसि रविसुतादास्फुजिन्नीरयायी
तद्वत्कामास्पदस्था बुधसितशनयः स्वर्क्षगे भार्गवे हि ॥ १७ ॥

अन्वयः—शुक्रज्ञौ द्यूनयातौ गगन-विलयगौ ( चेत्तदा ) मानवः पुंश्चलः स्यात् । कविधरणिसुतौ कामाज्ञामन्दिरस्थौ (चेत्तदा) तद्वत् । काव्यारौ आज्ञाम्बुयातौ (तदा) तद्वत् । आस्फुजित् इन्दोः नभसि, रविसुतात् नीरयायी (चेत्तदा) तद्वत् । बुधसितशनयः कामास्पदस्थाः भार्गवे स्वर्क्षगे ( सति ) हि तद्वत् स्यात् ॥ १७ ॥

शुक्रज्ञाविति । शुक्रबुधौ सप्तमाष्टमदशमगतौ तदा मानवः पुंश्चलो व्यभिचारी स्यात् । शुक्रभौमौ सप्तमदशमस्थौ तद्वत् पुंश्चलः स्यात् । शुक्रभौमौ चतुर्थदशमगौ तद्वत् पुंश्चलः स्यात् । चन्द्राद्दशमे शुक्रे शनेश्चतुर्थे शुक्रे तदा तद्वत् पुंश्चलः । शुक्रे स्वराशिस्थे शुक्रबुधशनयः सप्तमदशमस्थाः तदा तद्वदित्यनुषङ्गः ॥ १७ ॥

जन्म काल में शुक्र और बुध सप्तम अष्टम या दशम स्थान में हों वह मनुष्य पुंश्चल ( व्यभिचारी ) होता है । शुक्र तथा मंगल सप्तम या दशम स्थान में हों तो

भी मनुष्य पुंश्चल होता है। शुक्र मङ्गल चतुर्थ या दशम स्थान में हो तो मनुष्य पुंश्चल होता है। चन्द्रमा से शुक्र दशम स्थान में हो तथा शनि से चतुर्थ स्थान में हो तो मनुष्य पुंश्चल होता है। बुध शुक्र और शनि सप्तम और दशम स्थान में हों तथा शुक्र अपनी राशि में हो तो मनुष्य पुंश्चल (व्यभिचारी) होता है ॥१७॥

प्रालेयांशात्सिताद्वा दिनमणितनयस्तत्पुरोभागवर्ती
मूर्तौ चेच्चन्द्रशुक्रौ यदि तरणिसुतं पश्यतश्चायशाः स्यात्।
शेफच्छेदो नराणामथ तपनसुते भूमिकेन्द्रेऽर्कयुक्ते
दृष्टे काव्योडुपाभ्यां यदि दिवसपतेश्चोपरागोऽत्र तद्वत् ॥ १८ ॥

अ०—प्रालेयांशात्सिताद्वा तत्पुरोभागवर्त्ती दिनमणितनयः (तथा) मूर्त्तौ चन्द्रशुक्रौ यदि तरणिसुतं पश्यतश्चेत्तदा अयशाः स्यात्। अथ अर्कयुक्ते तपनसुते भूमिकेन्द्रे काव्योडुपाभ्यां दृष्टे अत्र यदि दिवसपतेः उपरागः तदा नराणां शेफच्छेदः तद्वदयशाः स्यात् ॥ १८ ॥

प्रालेयांशादिति। चन्द्रात् शुक्राद्वा शनिस्तत्पुरोभागवर्ती तदग्रिमभावे स्थितः चन्द्रशुक्रौ लग्नस्थौ शनिं पश्यतश्चेत्तदा जातः अयशा अपकीर्तियुतः स्यात्। अथ सूर्ययुते शनौ भूमिकेन्द्रे लग्नस्थे शुक्रचन्द्रदृष्टे सति दिवसपतेः सूर्यस्य चोपरागो ग्रहणं तदा शेफच्छेदः लिङ्गच्छेदः तद्वदपकीर्तिश्च स्यात् ॥ १८ ॥

चन्द्रमा या शुक्र से आगे के भाव में यदि शनि हो या लग्न स्थित चन्द्रमा तथा शुक्र शनि को देखते हों तो मनुष्य अयश युत (कलङ्कित) होता है। सूर्य से युक्त शनि लग्न में हो और शुक्र तथा चन्द्रमा से दृष्ट हो और यदि सूर्यग्रहण का समय हो तो मनुष्य का लिङ्गच्छेद तथा उसे अयश होता है ॥ १८ ॥

याते वक्रग्रहर्क्षे जनुषि भृगुसुते मानवस्तोषदायी
सीमन्तिन्या रतेः स्यान्न खलु मदनगं भार्गवं लग्ननाथः।
पश्येत्स्वीयालयस्थो यदि रहसि तदा कामिनीतोषदाता
न स्यादेवं हिमांशुर्दिनकरसुतयुक् भौमतः खे सुखे वा ॥ १९ ॥

अ०—जनुषि भृगुसुते वक्रग्रहर्क्षे याते मानवः सीमन्तिन्याः रतेः तोषदायी न स्यात्। खलु स्वीयालयस्थः लग्ननाथः मदनगं भार्गवं यदि पश्येत्तदा कामिनीतोषदाता न स्यात्। एवं हिमांशुर्दिनकरसुतयुक् भौमतः खे वा सुखे तदा रहसि कामिनीतोषदाता न स्यात् ॥ १९ ॥

यात इति। शुक्रे वक्रग्रहराशिगते सति मानवो जातः सीमन्तिन्या रतेः सम्भोगाद्धेतोस्तोषदायी सुखदायी सुखदो न स्यात्। स्वीयालयस्थो लग्ननाथः सप्तमगं भार्गवं यदि पश्येत्पूर्णदृष्ट्या इति शेषः। तदा जातः रहसि रतिस्थाने कामिनी-

तोषदाता न स्यादिति । चन्द्रः शनियुतः भौमाच्चतुर्थे दशमे वा स्यात्तदा एवमुक्तप्रकारेण कामिनीतोषदाता न स्यादेव ॥ १९ ॥

जिसके जन्मकाल में शुक्र वक्री ग्रह की राशि में हो वह मनुष्य स्त्री को रति ( सम्भोग ) में सन्तुष्ट करने वाला नहीं होता है। लग्नस्थ लग्नेश सप्तमस्थ शुक्र को देखता हो तो जातक एकान्त में स्त्री को संभोग से सन्तुष्ट नहीं कर सकता है। इसी तरह शनि युत चन्द्रमा मंगल से दशम या चतुर्थ में हो तो मनुष्य स्त्री को रति से सन्तोष देनेवाला नहीं होता है ॥ १९ ॥

क्षोणीपुत्रेण युक्तः प्रथमसुरगुरुर्लग्नतः षष्ठपोऽयं
कामाधिक्यं नराणां जनयति नियतं पापदृष्टो विशेषात् ।
काव्ये स्वीयालयस्थे तदनु मिथुनगे कामवान्मानवः स्या-
न्मूर्तौ सप्ताश्वसूनौ धनुषि च वृषभे चेत्पुमानल्पकामः ॥२०॥

अ०—प्रथमसुरगुरुः क्षोणीपुत्रेण युक्तः लग्नतः षष्ठपः अयं नराणां नियतं कामाधिक्यं जनयति । पापदृष्टः विशेषात् कामाधिक्यं जनयति । काव्ये स्वीयालयस्थे तदनु मिथुनगे मानवः कामवान् स्यात् । सप्ताश्वसूनौ धनुषि च वृषभे मूर्त्तौ चेत्पुमानल्पकामः स्यात् ॥ २० ॥

क्षोणीति । प्रथमसुरगुरुः शुक्रः भौमयुक्तोऽयं लग्नात्षष्ठपः षष्ठभावाधिपः तदा जातानां नराणां कामाधिक्यं कामबलप्रचुरतां नियमेन जनयति । स शुक्रः पापदृष्टश्चेद्विशेषात्कामाधिक्यं जनयति । तदनु शुक्रे स्वभवनस्थे मिथुनस्थे वा मानवः कामवान् स्यात् । सप्ताश्वपुत्रः शनिः धनुषि वृषे वा लग्ने चेत्तदा मानवोऽल्पकामः स्यात् ॥२०॥

यदि शुक्र मंगल से युक्त होकर लग्न से षष्ठ भावेश हो तो मनुष्य विशेष कामी होता है। और यदि पापग्रह से दृष्ट हो तो मनुष्य अत्यन्त कामी होता है। शुक्र अपनी राशि ( वृष तुला ) में हो या मिथुन में हो तो मनुष्य विशेष कामी होता है। यदि शनि धनु या वृष में होकर लग्न स्थित हो तो मनुष्य स्वल्पकामी होता है ॥२०॥

मन्दे नक्रेऽल्पभाषीत्यथ रिपुगृहपे वा सुधांशावदृश्ये
चेदर्धे संस्थितेऽङ्को भवति जनिमतां नेत्रयोः क्रूरयुक्ते ।
पश्येत्क्षीणं न चन्द्रं यदि भृगुतनयः सूर्यजः पश्यतीन्दुं
स्वर्क्षे चन्द्रे नभस्थैर्यदि मदनगतैर्वीक्षिते पापखेटैः ॥ २१ ॥

अ०—अथ मन्दे नक्रे अल्पभाषी स्यात् । रिपुगृहपे वा सुधांशौ अदृश्येऽर्द्धे संस्थिते क्रूरयुक्ते जनिमतां नेत्रयोः अङ्कः भवति । यदि भृगुतनयः क्षीणं चन्द्रं न पश्येत् सूर्यजः इन्दुं पश्यति स्वर्क्षे चन्द्रे नभस्थैः मदनगतैः पापखेटैः वीक्षिते च नूनमल्पनेत्रः स्यात् ॥ २१ ॥

मन्द इति । शनौ मकरस्थे सति अल्पभाषी अप्रयोजनबहुभाषी न भवति । तदनु षष्ठभवननाथे चन्द्रे वा क्रूरयुते अदृश्यार्धसंस्थिते सति जन्मतो नेत्रयोरङ्कश्चिह्नविशेषो भवति । सप्तमभावभोग्यांशमारभ्याष्टमादिक्रमेण लग्नभुक्तांशपर्यन्तमदृश्यार्धं ज्ञेयम् । यदि क्षीणं चन्द्रं शुक्रो न पश्येत् शनिरिन्दुं पश्यति कर्कस्थे चन्द्रे दशमे सप्तमे वा स्थितैः क्रूरग्रहैर्दृष्टे तदा नूने निश्चयेन स्वल्पनेत्रः स्यादित्यग्रिमपद्येनान्वयः ॥ २१ ॥

जिस के जन्मकाल में शनि मकर राशि में हो वह मनुष्य अल्पभाषी ( परिमित बोलने वाला ) होता है । षष्ठेश या चन्द्रमा पाप ग्रह से युक्त होकर अदृश्यार्द्ध में ( सप्तम भाव के भोग्यांश से लग्न के भुक्तांश तक ) हो तो जातक के आँखों में कोई चिह्न ( निशान ) होता है । यदि क्षीण चन्द्रमा शुक्र की दृष्टि से रहित हो और शनि चन्द्रमा को देखता हो या कर्क राशि गत चन्द्रमा को सप्तमस्थ और दशमस्थ पाप-ग्रह देखते हों तो निश्चय करके वह जातक छोटा नेत्र वाला अथवा थोड़ी रोशनी वाला होता है ॥ २१ ॥

स्यान्नूनं चाल्पनेत्रस्तदनु तनुगतं भूमिजं वा त्वपेशं
पश्येद्वाचस्पतिश्चेदसुरकुलगुरुः काणदृङ्मानवः स्यात् ।
विच्छाया तिग्मभानोः क्षितिभुवि च पुरोभागगे दृङ्नराणां
सौम्ये चिह्नं दृशि स्यादथ वपुषि लये भार्गवे क्रूरदृष्टे ॥ २२ ॥
नेत्रे पीडाश्रुपातात्तदनु शशिकुजावेकभावे यदाऽक्ष्णो-
श्चिह्नं किञ्चित्तदानीं ग्रहबलवशतो दृश्यमेवं सुधीभिः ।
मार्तण्डे रिःफयाते तदनु नवमगे पुत्रगे वा खलाढ्ये
दृष्टे वा स्यान्मनस्वी सुविकलनयनः सूर्यजे व्याधियुक्तः ॥ २३ ॥

अन्वयः—तदनु वाचस्पतिः वा असुरकुलगुरुः तनुगतं भूमिजं वा त्वपेशं पश्येत् चेत्तदा मानवः काणदृक् स्यात् । तिग्मभानोः क्षितिभुवि पुरोभागगे नराणां दृक् विच्छाया स्यात् । तिग्मभानोः सौम्ये पुरोभागगे दृशि चिह्नं स्यात् । अथ वपुषि लये भार्गवे क्रूरदृष्टे अश्रुपातान्नेत्रयोः पीडा स्यात् । यदा शशिकुजावेकभावे तदानीं अक्ष्णोः किञ्चिच्चिह्नं स्यात् एव ग्रहबलवशतः सुधीभिः दृश्यम् । खलाढ्ये वा दृष्टे मार्तण्डे रिःफयाते तदनु नवमगे वा पुत्रगे मनस्वी सुविकलनयनः स्यात् । सूर्यजे क्रूरदृष्टे वा युते रिःफगे तदनु नवमगे वा पुत्रगे तदा व्याधियुक्तः स्यात् ॥ २२–२३ ॥

स्यान्नूनमिति । तदनु लग्नस्थं भौमं चन्द्रं वा वाचस्पतिः शुक्रश्च पश्येच्चे-न्मानवः काणनेत्रः स्यात् । तिग्मभानोः सूर्यात्पुरोभागगे अग्रिमभावे अस्तामिता-

स्थिणि भौमे नराणां दृक् विच्छाया कान्तिरहिता स्यात्। सूर्यात् बुधे पुरोभागगे दृशि चिह्नं स्यात्। अथ भार्गवे शुक्रे लग्नस्थेऽष्टमे वा क्रूरदृष्टे सति अश्रुपाताद्धेतोः नेत्रपीडा स्यादित्यमिमश्लोकेन संबन्धः ॥ २२ ॥

नेत्र इति। तदनु चन्द्रभौमौ एकभागैकनवांशस्थौ तदा नेत्रयोः किञ्चिच्चिह्नं स्यात्। सुधीभिर्योगस्तु ग्रहबलवशादेवमुक्तप्रकारेणादेश्यं वक्तव्यम्। तदनु क्रूरग्रहदृष्टे युते वा सूर्ये व्ययगे वा नवमे पञ्चमे सति जातः सुविफलनेत्रोऽप्रशस्तनयनः स्यात्। सूर्यजे शनौ क्रूरयुते दृष्टे वा क्रूरे द्वादशगे नवमपञ्चमगे वा व्याधियुक्तो रोगी स्यात् ॥ २३ ॥

लग्नस्थित मंगल या चन्द्रमा को बृहस्पति या शुक्र देखता हो तो मनुष्य, काना (एक आंखवाला) होता है। सूर्य के आगे (कालांशान्तर्गत) मंगल हो तो मनुष्य की आंख रोशनी से हीन होती है। यदि सूर्य के आगे (कालांशान्तर्गत) बुध हो तो मनुष्य की आंखों में चिह्न (निशान) होता है। लग्न स्थित शुक्र पाप ग्रह से दृष्ट हो तो मनुष्य की आंख से आंसू गिरने के कारण नेत्र पीड़ा होती है। यदि चन्द्रमा और मंगल एक राशि में हों तो मनुष्य की आंखों में कोई चिह्न हो। इस प्रकार बलवान् ग्रह के अनुसार विद्वानों को विचार करना चाहिये। सूर्य पापग्रह से युक्त या दृष्ट होकर द्वादश नवम या पञ्चम स्थान में हो तो मनुष्य मनस्वी (अपने इच्छानुसार काम करने वाला) और विकल नेत्र (नेत्र रोग) वाला होता है। अथवा शनि पाप ग्रह से युक्त या दृष्ट होकर द्वादश, नवम या पंचम स्थान में हो तो मनुष्य व्याधि युक्त (रोगी) होता है ॥ २२–२३ ॥

चन्द्रं पृष्ठोदयस्थं हिबुकगृहगतः सूर्यसूनुः प्रपश्ये-
दित्थं लग्नाधिनाथे क्रियभवनगते मानवो वामनः स्यात्।
कोशे पीयूषभानुर्जलचरगृहगः सौरिणा संयुतो वा
मार्तण्डे भूमिकेन्द्रे यदि भवति तदा दद्रुमान् पूरुषः स्यात् ॥२४॥

अन्वयः—हिबुकगृहगतः सूर्यसूनुः पृष्ठोदयस्थं चन्द्रं प्रपश्येत् इत्थं लग्नाधिनाथे क्रियभवनगते मानवो वामनः स्यात्। जलचरगृहगः पीयूषभानुः यदि कोशे वा सौरिणा संयुतः भवति, (तथा) मार्तण्डे भूमिकेन्द्रे यदि भवेत्तदा पूरुषः दद्रुमान् स्यात् ॥ २४ ॥

चन्द्रमिति। पृष्ठोदयराशिगं चन्द्रं चतुर्थभावस्थः शनिः प्रपश्येत्। लग्नपे मेषराशिस्थिते जातो मानवो वामनः ह्रस्वकायः स्यात्। जलचरराशिस्थश्चन्द्रो द्वितीये अथवा शनिना युक्ते अथवा सूर्ये लग्नगे यदि तदा पूरुषः दद्रुमान् कुष्ठयुक्तः स्यात् ॥ २४ ॥

पृष्ठोदय राशि गत चन्द्रमा को चतुर्थ स्थान स्थित शनि देखता हो तथा लग्नेश मेष राशि में हो तो जातक वामन ( नाटा ) होता है। यदि चन्द्रमा जलचर ( कर्क कुम्भ मीन और मकर ) राशि में होकर द्वितीय भाव में हो या शनि से दृष्ट हो अथवा सूर्य लग्न में हो तो मनुष्य को दाद ( दिनाय ) की बिमारी होती है ॥ २४ ॥

दृष्टे क्रूरैर्न सौम्यैर्यदि रिपुगृहपे चोडुपे प्लीहवान् स्या-
देवं कामाङ्गनाथे तदनु रविसुतस्तुर्यगो नष्टदृष्टिः।
प्लीही स्याल्लग्ननाथे दिनकरतनये क्रूरनिष्पीडिते चेत्
सौख्यायुङ्मानवः स्यात्तनुसदनगते प्लीहवान् हर्षहीनः ॥ २५ ॥

अन्वयः—रिपुगृहपे उडुपे च सौम्यैर्न ( केवलम् ) क्रूरैर्दृष्टे यदि तदा प्लीहवान् स्यात्। एवं कामाङ्गनाथे ( सति ) तदनु ( प्लीहवान् स्यात् )। रविसुतस्तुर्यगो ( क्रूरैर्दृष्टः ) नष्टदृष्टिः प्लीही स्यात्। लग्ननाथे दिनकरतनये चेत् क्रूरनिष्पीडिते ( तदा ) मानवः सौख्यायुक् स्यात्, तनुसदनगते दिनकरतनये [प्लीहवान् हर्षहीनः स्यात् ॥ २५ ॥

दृष्ट इति। षष्ठभावाधिपे चन्द्रे सौम्यदृष्टिरहिते केवलं क्रूरैर्दृष्टे प्लीहपीडितः स्यात्। एवं कामाङ्गनाथे सप्तनाथे लग्ननाथे चन्द्रे केवलं क्रूरदृष्टे प्लीहवान् स्यात्। पापग्रहैर्दृष्टः शनिश्चतुर्थश्चेन्नष्टदृष्टिः अन्धः स्यात्। क्रूरग्रहैः निष्पीडिते दृष्ट्या योगेन वा विकलीकृते यदा विजिते लग्नेशे शनौ सौख्यायुक् सौख्यरहितः स्यात्। लग्नगते शनौ प्लीहवान् आनन्दरहितश्च स्यात् ॥ २५ ॥

जिस के जन्म समय में षष्ठेश और चन्द्रमा शुभ दृष्टि से हीन केवल पाप दृष्टि से युक्त हो वह मनुष्य प्लीहा रोग से पीड़ित होता है। इसी तरह सप्तमेश और लग्नेश यदि शुभ दृष्टि से रहित पाप दृष्टि युक्त हो तो भी मनुष्य प्लीहा रोग से पीड़ित होता है। यदि सूर्य चतुर्थ स्थान में पाप ग्रह से दृष्ट हो तो मनुष्य अन्धा होता है; और प्लीहा-रोगी भी होता है। लग्नेश शनि यदि पाप ग्रहों से पीड़ित ( युक्त या दृष्ट ) हो तो मनुष्य दुःखी होता है। यदि शनि लग्न में पाप ग्रह से दृष्ट हो तो मनुष्य प्लीहा रोग से युक्त और हर्ष ( आनन्द ) हीन होता है ॥ २५ ॥

क्रूराः केन्द्रालयस्था वपुषि च विकलः केन्द्रगौ पुष्पवन्तौ
किं वा लग्ने प्रपश्येत्कविमिनतनयः श्रोणिभागेऽङ्गहीनः।
काव्यः पातालयायी सुरपतिगुरुणा क्वापि युक्तोऽर्कसूनु-
भौमो वा सौहिसोरो भवति [illegible] श्रोणिभागे युतो वा क्रूरैः ॥ २६ ॥



अन्वयः—क्रूराः केन्द्रालयस्थाः ( तदा ) वपुषि विकलः ( स्यात् ), पुष्पवन्तौ

केन्द्रगौ ( चेत्तदा अपि ) विकलः स्यात् । किं वा लग्ने कविम् इनतनयः प्रपश्येत्तदा श्रोणिभागे अङ्गहीनः स्यात् । सुरपतिगुरुणा युक्तः काव्यः पाताळचार्यौ, अर्कसूनुः भौमो वा रौहिणेयः क्वापि ( भवति चेत् ) तदा श्रोणिभागे भुजेऽङ्घ्रौ विकलः स्यात् ॥ २६ ॥

क्रूरा इति । यदा क्रूराः केन्द्रगास्तदा जातः वपुषि शरीरे विकलः विकलाङ्गः स्यात् । पुष्पवन्तौ सूर्यचन्द्रौ केन्द्रगौ वा तदा विकलाङ्गः । अत्र पुष्पवन्तावित्युक्त्या चन्द्रसूर्ययोरेकराशिस्थत्वं विवक्ष्यते, .चन्द्रस्य क्षीणत्वाद्योगेऽस्मिन् विकल इति भावः । लग्नस्थं शुक्रं शनिः पश्येत्तदा श्रोणिभागे कटितटे अङ्गहीनः । शुक्रश्चतुर्थगः गुरुसहितः शनिर्भौमो बुधो वा यत्र कुत्र स्थितस्तदा कटितटे हस्ते चरणे वा विकलः स्यात् ॥ २६ ॥

यदि पापग्रह लग्न में हो तो मनुष्य के शरीर के किसी अङ्ग में विकलता ( विकार ) होती है । या सूर्य तथा चन्द्रमा एक राशि (१)में होकर केन्द्र में ( १।४। ७।१० ) हो तो भी मनुष्य विकलाङ्ग होता है । या लग्नमें स्थित शुक्र को शनि देखता हो तो मनुष्य के कमर भाग में विकलता होती है। यदि बृहस्पति से युत शुक्र चतुर्थ में हो या बृहस्पति से युक्त शनि, मङ्गल या बुध किसी भी स्थान में हो तो मनुष्य के कमर और हाथ पाँव में विकलता होती है ॥ २६ ॥

आयुःपुण्याधिनाथौ यदि खलखचरात्तुर्यगौ पापयुक्तौ
जङ्घावैकल्यवान् स्यात्कुजशनिसहिते सैंहिकेये च सूर्ये ।
द्वेष्यस्थे तद्वदेवं शनिरिपुगृहपौ रिःफयातौ खलैश्चेद्-
दृष्टौ तद्वत्तदानीं रविविधुरविजा वैरिरन्ध्रालयस्थाः ॥ २७ ॥
स्यादार्तिः पञ्चशाखे, तदनु दशमगे सूर्यसूनौ सिताढ्ये
क्लीबः स्यात्सूर्यसूनौ व्ययरिपुगृहगे शुक्रतः क्लीबरूपः ।
पश्येत्सूर्यालयस्थो मदनभवनगं भूमिसूनुं सुधांशु-
श्चार्के काणश्च कर्के यदि शुभगृहपो मेषसिंहालिनके ॥ २८ ॥

अ०—यदि आयुःपुण्याधिनाथौ पापयुक्तौ खलखचरात् तुर्यगौ ( चेत्तदा ) जंघा-वैकल्यवान् स्यात् । कुजशनिसहिते सहिकेये सूर्ये,च द्वेष्यस्थे ( तदा ) तद्वत् ( जंघा-वैकल्यवान् स्यात् )। एवं खलैश्च दृष्टौ शनिरिपुगृहपौ रिःफयातौ चेत्तदानीं तद्वत् स्यात् । रविविधुरविजाः वैरिरन्ध्रालयस्थाः तदानीं पञ्चशाखे आर्त्तिः स्यात् । तदनु

( १ ) चन्द्रमा और सूर्य दोनों एक राशि गत अमावस्या में होते हैं इसलिये अमावस्या के दिन जन्म होना सिद्ध हुआ । और अमावस्या का "दर्शः सूर्येन्दुसंगम" नाम भी है, इसलिये गतार्थ हुआ ।

सिताढ्यं सूर्यसूनौ दशमगे क्लीवः स्यात्। सूर्यसूनौ शुक्रतः व्ययरिपुगृहगे (तदा) क्लीवरूपः स्यात्। सूर्यालयस्थः सुधांशुः मदनभवनगं भूमिसूनुं प्रपश्येत्तदा अथवा कर्के (मदनभवनगं भूमिसूनुं पश्येत्) तदा काणः स्यात्। इमौ योगौ यदि शुभगृहपः मेषसिंहालिनक्रे स्थितस्तदैव स्यात्॥ २७-२८॥

आयुरिति। निधननवमेशौ क्रूराच्चतुर्थगौ क्रूरयुतौ जङ्घावैकल्यवान् अनूरुः स्यात्। राहौ भौमशनियुते षष्ठगे चकारात् भौमे शनियुते सूर्ये षष्ठगते तद्वत् पङ्गुः स्यात्। एवं शनिषष्ठभावेशौ क्रूरदृष्टौ व्ययस्थौ तद्वत् पङ्गुः स्यात्। सूर्यविधुशनयः षष्ठाष्टमभावस्थाः तदानीं तस्य पञ्चशाखे हस्ते आर्तिः पीडा स्यादित्यग्रिमश्लोकेन सम्बन्धः॥ २७॥

स्यादार्त्तिरिति। तदनु शुक्रयुते दशमस्थे शनौ क्लीवो नपुंसकः स्यात्। शुक्राक्रान्तराशेर्व्ययषष्ठगे शनौ क्लीवरूपो रूपेण क्लीवसदृशः न तु क्लीवः। सिंहराशिस्थश्चन्द्रः सप्तमगं भौमं पश्येत्तदा काणः स्यात्। कर्कस्थः सूर्यः सप्तमगं भौमं पश्येत्तदा काणः, उभययोगेऽपि काणः स्याद्यदि नवमपः मेषसिंहवृश्चिकमकरे स्यादिति सम्बन्धः॥ २८॥

अष्टमेश तथा नवमेश पापग्रह से युक्त होकर लग्न से चतुर्थ स्थान में हो या पापग्रह से चतुर्थ में हो तो मनुष्य के जंघा प्रदेश में विकलता होती है। मंगल और शनि से युक्त राहु या सूर्य षष्ठ स्थान में हो तो भी मनुष्य के जंघा प्रदेश में विकलता (बिमारी) होती है। इसी तरह पाप दृष्टि से युक्त होकर शनि और षष्ठेश द्वादश स्थान में हो तो भी जातक की जंघा में विकलता होती है, अर्थात् पङ्गु होता है। सूर्य चन्द्रमा और शनि यदि षष्ठ या अष्टम स्थान में हों तो मनुष्य के हाथ में कोई विशेष पीड़ा होती है। शुक्र से युत शनि यदि दशम स्थान में हो तो जातक नपुंसक (खोजा) होता है। यदि शनि शुक्र से द्वादश या षष्ठ स्थान में हो तो मनुष्य नपुंसक होता है। सिंह राशि गत चन्द्रमा सप्तम स्थान स्थित मंगल को देखता हो तो मनुष्य काना (एक आंख वाला) होता है। या कर्कराशि गत सूर्य सप्तमस्थ मंगल को देखता हो तो मनुष्य काना (एक आंख वाला) होता है। यह काण योग यदि नवमेश मेष, सिंह, वृश्चिक या मकर राशि में हो तो होता है, अन्यथा नहीं॥ २७-२८॥

अन्योन्यं पश्यतश्चेत्तरणिहिमकरौ तत्तनूजौ मिथो वा
भूसूनुः पश्यतीनं समभवनगतं त्वङ्गचन्द्रौ यदौजे।
ओजर्क्षे युग्मराशौ हिमकरशशिजौ भूसुतेनेक्षितौ चेत्
पुंराशौ लग्नशुक्रौ तदनु हिमकरः क्लीबयोगाः षडेते॥ २९॥

अ०—ओजर्क्षे युग्मराशौ तरणिहिमकरौ चेदन्योन्यं पश्यतः वा तत्तनूजौ मिथः पश्यतः। समभवनगतमिनं ( विषमराशिगः भूसूनुः पश्यति ) यद्वा तु ओजे अब्ज-चन्द्रौ ( तथा ) हिमकरशशिजौ ओजर्क्षे भूसुतेनेक्षितौ, पुंराशौ लग्न-शुक्रौ तद्वत् हिमकरः एते षट् क्लीबयोगाः भवन्ति ॥ २९ ॥

अन्योन्यमिति। सूर्यचन्द्रौ ओजर्क्षे युग्मराशौ इत्याकृष्यान्वयः। अन्योन्यं परस्परं पश्यतः, ओजराशिगः सूर्यः समराशिगं चन्द्रं पश्यति तादृशश्चन्द्रः सूर्यं पश्यति अयमेको योगः। तत्तनूजौ शनिबुधौ ओजराशिगावन्योन्यं पश्यतः द्वितीयो योगः। समराशिगं सूर्यं भौमो विषमराशिग इत्यर्थात् सिद्धं भौमं च सूर्यः अन्योन्यं पश्यतः इति तृतीयो योगः। लग्नचन्द्रौ विषमराशिगौ भौमेन अर्थात् समराशिगेन दृष्टाविति चतुर्थो योगः। चन्द्रबुधौ क्रमेण विषमसमराशिगौ भौमेन वीक्षिताविति पञ्चमो योगः। लग्नशुक्रौ चन्द्रश्च पुंराशौ पुरुषग्रहराशिनवांशे स्थिता-विति षष्ठो योगः। एते षट् क्लीबयोगा ज्ञेयाः। तदुक्तं सारावल्याम्—

"अन्योन्यं रविचन्द्रौ विषमौ विषमर्क्षगौ निरीक्षेते।
इन्दुभरविपुत्रौ वा तथैव नपुंसकं कुरुतः ॥ १ ॥
वक्रो विषमगतोऽर्कं समगं चैवं परस्परालोकात्।
विषमर्क्षे लग्नेन्दू समराशिगतः कुजो विलोकयति ॥ २ ॥
शशिशशिजौ समविषमे भौमेन निरीक्षितौ भवतः।
ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ताः" ॥ ३ ॥ इति ॥ २९ ॥

यदि विषम राशि में सूर्य और सम राशि में चन्द्रमा हो दोनों की परस्पर दृष्टि हो या विषम राशि में चन्द्रमा और सम राशि में सूर्य हो और दोनों की परस्पर दृष्टि हो (१), अथवा इसी तरह विषम और सम राशि में स्थित बुध और शनि की परस्पर दृष्टि हो (२), विषम राशिगत सूर्य को समराशि गत मंगल या विषमराशि गत मंगल को समराशि गत सूर्य देखता हो (३), या विषमराशि गत लग्न या चन्द्रमा को समराशि गत मंगल देखता हो (४), या विषमराशि गत चन्द्रमा और समराशि गत बुध को मंगल देखता हो (५), या पुरुष राशि या पुरुषराशि के नवांश गत लग्न, शुक्र और चन्द्रमा हो (६), तो जातक नपुंसक होता है। इस प्रकार ६ नपुंसक योग हुए॥

आयुःस्थानोपयाते भरणिसुतयुते भार्गवे वातकोपा-
त्काव्ये भौमेन युक्ते कुजभवनगते भूमिजा मुष्कवृद्धिः।
भौमर्क्षे काव्यचन्द्रौ सुरपतिगुरुणा सूर्यजेनाथ दृष्टौ
एवं स्यात्तदा जातो [illegible] मुष्कवृद्धिर्नितान्तम् ॥ ३० ॥

अ०—धरणिसुतयुते भार्गवे आयुःस्थाने प्रयाते वातकोपात् ( तथा ) भौमेन युक्ते काव्ये कुजभवनगते भूमिजा मुष्कवृद्धिः स्यात्। यदि मानवानां जनुषि सुरपतिगुरुणा अथ सूर्यजेन दृष्टौ काव्यचन्द्रौ भौमर्क्षे चेत्तदा नूनं नितान्तं कललजा मुष्कवृद्धिः स्यात् ॥ ३० ॥

आयुरिति। भौमयुते शुक्रेऽष्टमस्थे वातकोपान्मुष्कवृद्धिः वृषणवृद्धिः स्यात्। भौमराशिगते भौमयुते शुक्रे भूमिसंसर्गात् वातकोपजा वृषणवृद्धिः स्यात्। येषां मानवानां जन्मसमये भौमराशिस्थौ शुक्रचन्द्रौ गुरुशनिदृष्टौ तेषां कललदोषजा वृषणवृद्धिरतिशयिता स्यात्। कललं शुक्रशोणितमिश्रीभावः ॥ ३० ॥

जिसके जन्मसमय में मंगल से युत शुक्र अष्टम स्थान में हो उसको वायु के प्रकोप से अण्डकोश की वृद्धि होती है। यदि मंगल से युत होकर शुक्र मंगल की राशि (मेष वृश्चिक) में हो तो पृथ्वी के विकार से अण्डकोश की वृद्धि होती है। यदि जन्मकाल में बृहस्पति और शनि से दृष्ट होकर शुक्र और चन्द्रमा मंगल की राशि में हो तो निश्चय करके विशेष आकार शुक्र और रक्त के विकार से अण्डकोश की वृद्धि होती है ॥ ३० ॥

क्रूरैर्दृष्टे विलग्ने सुविकृतरदनश्चापगोमेषसंज्ञे
खल्वाटः पापलग्ने धनुषि गवि तथाऽऽलोकिते क्रूरखेटैः।
धर्मार्थान्त्यात्मजस्था यदि खलखचरा बन्धभाक्पूरुषः स्या-
देवं लग्ने क्रिये वा धनुषि गवि तथा रश्मिजं बन्धनं नुः ॥ ३१ ॥

अन्वयः—चाप-गो-मेषसंज्ञे विलग्ने क्रूरैर्दृष्टे ( सति ) सुविकृतरदनः स्यात्। धनुषि गवि पापलग्ने क्रूरखेटैः आलोकिते जातकः खल्वाटः स्यात्। यदि खलखचराः धर्मार्थान्त्यात्मजस्थाः पूरुषः बन्धभाक् स्यात्। एवं क्रिये वा धनुषि गवि ( राशौ क्रूराक्रान्ते ) नुः रश्मिजं बन्धनं स्यात् ॥ ३१ ॥

क्रूरैरिति। धनुषि वृषे मेषे वा विलग्ने क्रूरैर्दृष्टे विकृतदशनः दन्तरोगी स्यात्। पापलग्ने पापैर्युक्तं लग्नं पापलग्नं तस्मिन् यथा प्रागुक्तयोगे न बाढ्यं स्यात्। तस्मात् क्रूरग्रहयुक्ते धनुषि वृषे वा लग्ने क्रूरदृष्टे खल्वाटो खलतिरोगी स्यात्। नवमद्वितीयद्वादशपञ्चमस्थाः क्रूराश्चेत्तदा बन्धभाक् पुरुषः स्यात्। एवं मेषे धनुषि वृषे वा लग्ने क्रूराक्रान्ते नुः पुरुषस्य रश्मिबन्धनं स्यात् ॥ ३१ ॥

धनु, मेष या वृष राशि लग्न हो और पाप ग्रह से दृष्ट हो तो मनुष्य दन्त का रोगी होता है। धनु या वृष लग्न पाप ग्रह से दृष्ट हो तो मनुष्य खल्वाट होता है। यदि पाप ग्रह नवम, द्वितीय, द्वादश और पञ्चम स्थान में हो तो मनुष्य बन्धन भोगने वाला ( जेल की सजा भोगने वाला) होता है। इसी तरह यदि मेष वृष या धनु लग्न पाप ग्रह से युक्त हो तो मनुष्य रस्सी के बन्धन ( फांसी ) से युक्त होता है ॥ ३१ ॥

दुर्गन्धिर्दानवेज्ये शनिभवनगते मानवो विग्रहे स्याद्
द्वेष्याधीशे बुधर्क्षे तदनु मकरगे तद्वदत्राथ काव्ये ।
केन्द्रस्थे तेन युक् स्यादथ कविरविजौ स्वीयहद्दायुतौ चे-
त्तद्वच्चन्द्रेऽजयाते तनुसदनगते चानने स्याद्विगन्धिः ॥ ३२ ॥

अन्वयः—दानवेज्ये शनिभवनगते मानवो विग्रहे दुर्गन्धिः स्यात् । द्वेष्याधीशे बुधर्क्षे तदनु मकरगे तद्वत् ( स्यात् ) । अथ काव्ये ( बुधर्क्षे ) तेन युक् केन्द्रस्थे सति ( तद्वत् स्यात ) । अथ कविरविजौ स्वीयहद्दायुतौ चेत् ( तद्वत् ) स्यात् । अजयाते चन्द्रे तनुसदनगते आनने विगन्धिः स्यात् ॥ ३२ ॥

दुर्गन्धिरिति । शुक्रे शनिराशिस्थे जातो मानवो विग्रहे शरीरे दुर्गन्धिः स्यात् । षष्ठाधिपे मिथुनकन्यामकरगे तद्वद्विग्रहे दुर्गन्धिः । अथ काव्ये शुक्रे बुधर्क्षे तेन बुधेन युक्ते केन्द्रगे सति तद्वद्विग्रहे दुर्गन्धिः । अथ शुक्रशनी स्वीयहद्दायुतौ स्वत्रिंशांशगौ चेत्तद्वद्विग्रहे दुर्गन्धिः । अत्र शब्दानुरोधात्त्रिंशांशो हद्दाशब्देनोपलक्षितः । मेषस्थे चन्द्रे लग्नगते मुखे दुर्गन्धिः स्यात् ॥ ३२ ॥

शुक्र यदि शनि की राशि ( मकर कुम्भ ) में हो तो मनुष्य के शरीर में दुर्गन्धि होती है । षष्ठेश बुध की राशि ( मिथुन कन्या ) में या मकर में और बुध से युक्त होकर केन्द्र ( १।४।७।१० ) में हो तो मनुष्य दुर्गन्धि युक्त शरीरवाला होता है । या शुक्र तथा शनि अपनी २ हद्दा में हो तो भी मनुष्य दुर्गन्धि युक्त शरीर वाला होता है । अथवा मेष लग्न चन्द्रमा से युक्त हो तो मनुष्य के मुख में दुर्गन्धि होती है॥३२॥

एवं ग्रहाणां सदसत्फलानां योगाद् ग्रहज्ञैरनुयोजनीयम् ।
शुभाशुभं जन्मनि मानवानां फलं सुमत्या प्रविचार्य नूनम् ॥ ३३ ॥

अन्वयः—एवं जन्मनि सदसत्फलानां ग्रहाणां योगात् मानवानां शुभाशुभं फलं सुमत्या प्रविचार्य ग्रहज्ञैः नूनमनुयोजनीयम् ॥ ३३ ॥

एवमिति । ग्रहज्ञैर्ग्रहाणां दीप्तदीनादिज्ञानवद्भिः मानवानां जन्मनि शुभाशुभफलं सुमत्या ग्रहलग्नज्ञानसंस्कृतया बुद्ध्या विचार्य निश्चयेन वक्तव्यम् । तथोक्तं मृत्युलग्ने—

दशभेदं ग्रहगणितं जातकमवलोक्य विशेषमपि यः ।
कथयति शुभमशुभं वा तस्य न मिथ्या भवेद्वाणी ॥ १ ॥

तथा च प्रदर्शितं नीलकण्ठदैवज्ञैः—

स्वोच्चे दीप्तः समाख्यातो नीचे दीनः प्रकीर्तितः ।
मुदितो मित्रगेहस्थः स्वस्थश्च स्वगृहे ग्रहः ॥

शत्रुगृहे स्मृतः सुप्तो जितोऽन्यैश्च निपीडितः।
नीचाभिमुखगो यस्तु ग्रहः खिन्नस्तु स स्मृतः।
सुवीर्यः कथितः प्राज्ञैः स्वोच्चाभिमुखगो ग्रहः।
अधिवीर्यो निगदितः सुरश्मिः शुभवर्गगः (१) ॥ ३३ ॥

इस प्रकार जन्म काल में शुभाशुभ फलों को ग्रहों के योगानुसार मनुष्यों के लिये शुभाशुभ उत्तम रीति से विचार करके ज्यौतिषियों को निश्चय करके आदेश करना चाहिये ॥ ३३ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन्।
योगाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो रामरामैः प्रणीतः॥ ३४॥

इति जातकालङ्कारे तृतीयोऽध्यायः॥ ३ ॥

---

अन्वयः—श्रीगणेशेन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोषे मञ्जुलेऽस्मिन् अलङ्काराख्ये जातके (ग्रन्थे) रामरामैर्वृत्तैर्युक्तो योगाध्यायः प्रणीतः ॥ ३४ ॥

हृद्यैरिति। अध्यायं समापयति रामरामैस्त्रयस्त्रिंशद्भिः। शेषं सुगमम् ॥३४॥

इति हरभानुविरचितायां जातकालङ्कारटीकायां योगाध्यायस्तृतीयः ॥ ३ ॥

---

श्रीगणेश दैवज्ञने हृदय में रखने योग्य मनोहर पद्यों से सुशोभित विद्वानों को सन्तोष देने वाले इस सुन्दर जातकालङ्कार नामक ग्रन्थ में ३३ श्लोकों से योगाध्याय को बनाया ॥ ३४ ॥

इति जातकालङ्कारे भावबोधिनीभाषाटीकायां योगाध्यायस्तृतीयः।

---

## अथ विषकन्यायोगाध्यायः ॥ ४ ॥

अथ त्रिभिः पद्यैर्विशेषतो विषकन्यायोगानाह—

भौजङ्गे कृत्तिकायां शतभिषजि तथा सूर्यमन्दारवारे
भद्रासंज्ञे तिथौ या किल जननमियात्सा कुमारी विषाख्या।
लग्नस्थौ सौम्यखेटावशुभगगनगश्चैक आस्ते ततो द्वौ
वैरिक्षेत्रानुयातौ यदि जनुषि तदा सा कुमारी विषाख्या ॥ १ ॥

---

(१) फलान्यपि तत्रैव—
दीप्ते सिद्धिश्च कार्याणां दीने दुःखसमागमः। स्वस्थे कीर्तिस्तथा लक्ष्मीरानन्दो मुदिते महान् ॥
सुप्ते रिपुभयं दुःखं धनहानिर्निपीडिते। मुषिते परिहीने च कार्यनाशोऽर्थसंक्षयः ॥
गजाश्वकनकावाप्तिः सुवीर्ये रत्नसम्पदः। अधिवीर्ये सत्यलब्धिर्ग्रहैर्मित्रार्थसङ्गमः ॥ इति ॥

अन्वयः—भौजङ्गे कृत्तिकायां शतभिषजि तथा सूर्य=मन्दारवारे भद्रासंज्ञे तिथौ किल या कन्या जननमियात् सा कुमारी विषाख्या (भवति)। यदि जनुषि सौम्यखेटौ लग्नस्थौ एकश्च अशुभगगनग आस्ते, ततः द्वौ (पापौ) वैरिवेश्मानुयातौ तदा सा कुमारी विषाख्या (स्यात्) ॥ १ ॥

भौजङ्ग इति। आश्लेषायां कृत्तिकायां तथा शततारकासु नक्षत्रेषु रविशनि-भौमवारेषु भद्रासंज्ञके तिथौ द्वितीयासप्तमीद्वादशीसंज्ञकतिथौ या कन्या जननमियात् जन्म प्राप्नुयात् सा विषाख्या विषकन्या भवति । अथ नक्षत्रवारतिथीनां प्रत्येकं क्रमेण योगः । यथा आश्लेषा रविर्द्वितीया प्रथमो योगः । कृत्तिका शनिः सप्तमी द्वितीयो योगः । शततारका भौमो द्वादशी तृतीयो योगः । एषु योगेषु जाता कन्या विषाख्येत्यर्थः । द्वौ शुभग्रहौ लग्नगौ एकः पापो दशमस्थः द्वौ पापौ शत्रुभावस्थितौ यदि तत्र कन्या जायते तदा सा विषकन्या ॥ १ ॥

आश्लेषा, कृत्तिका, शतभिषा इन नक्षत्रों में सूर्य, शनि, मंगल इन दिनों में, द्वितीया सप्तमी और द्वादशी इन तिथियों में जिस कुमारी (लड़की) का जन्म हो वह विषकन्या होती है । जैसे आश्लेषा नक्षत्र, रविवार और द्वितीया तिथि (१); कृत्तिका नक्षत्र, शनिवार और सप्तमी तिथि (२), तथा शतभिषा नक्षत्र, मंगलवार और द्वादशी तिथि (३) इस प्रकार तीन योग हुये । यदि लग्न में दो शुभ ग्रह हों एक पाप ग्रह दशवें स्थान में और दो पाप ग्रह षष्ठस्थान में हों ऐसे योग में जन्म लेने वाली कुमारी विषकन्या होती है ॥ १ ॥

अथ क्रमेणापि नक्षत्रतिथिवारयोगानाह—

मन्दाश्लेषा द्वितीया यदि तदनु कुजे सप्तमी वारुणर्क्षे
द्वादश्यां च द्विदैवं दिनमणिदिवसे यज्जनिः सा विषाख्या ।
धर्मस्थो भूमिसूनुस्तनुसदनगतः सूर्यसूनुस्तदानीं
मार्तण्डः सूनुयातो यदि जनिसमये सा कुमारी विषाख्या ॥ २ ॥

अन्वयः—यदि मन्दाश्लेषाद्वितीया तदनु कुजे सप्तमीवारुणर्क्षे दिनमणिदिवसे द्वादश्यां च द्विदैवम् (तदा) यज्जनिः सा कुमारी विषाख्या । यदि जनिसमये भूमि-सूनुर्धर्मस्थः सूर्यसूनुः तनुसदनगतः मार्तण्डः सूनुयातः तदानीं सा कुमारी विषाख्या ॥ २ ॥

मन्दाश्लेषेति । अथ शनिवारे आश्लेषा द्वितीया, तदनु कुजवारे शततारका सप्तमी, दिनमणिदिवसे रविवारे विशाखा द्वादशी; एषु योगत्रयेषु यस्या जन्म सा विषकन्या भवति । यदि जन्मसमये भौमशनिसूर्याः क्रमेण नवम-लग्न-पञ्चमस्थास्तदा सा कुमारी विषकन्या भवति ॥ २ ॥

यदि शनिवार आश्लेषा नक्षत्र द्वितीया तिथि (१), मंगलवार सप्तमी और शतभिषा (२), रविवार द्वादशी तिथि और विशाखा नक्षत्र (३), इन तीन योगों में किसी कुमारी का जन्म हो तो वह विषकंन्या होती है। या जिसके जन्मलग्न से मंगल नवम स्थान में शनि लग्न में और सूर्य पञ्चम स्थान में हों वह कुमारी विषकन्या होती है ॥ २ ॥

अथ विषाख्यभङ्गमाह—

लग्नादिन्दोः शुभो वा यदि मदनपतिर्द्यूनयायी विषाख्या-
दोषं चैवानपत्यं तदनु च नियतं हन्ति वैधव्यदोषम् ।
इत्थं ज्ञेयं ग्रहज्ञैः सुमतिभिरखिलं योगजातं ग्रहाणा-
मार्यैरार्यानुमत्या मतमिह गदितं जातके जातकानाम् ॥ ३ ॥

अन्वयः—लग्नात् वा इन्दोः मदनपतिः वा शुभः द्यूनयायी ( भवति ) तदा विषाख्यादोषमनपत्यं च तदनु नियतं वैधव्यदोषं च हन्त्येव । इह जातके सुमतिभिर्ग्रहज्ञैः इत्थं आर्यानुमत्या जातकानां गदितमखिलं ग्रहाणां योगजातं मतमार्यैः गदितं ज्ञेयम् ॥ ३ ॥

लग्नादिन्दोरिति । लग्नाच्चन्द्राद्वा मदनपतिः सप्तमपतिः शुभग्रहो वा द्यूनयायी सप्तमस्थः विषाख्यदोषं तत्प्रयुक्तमनपत्यं सन्तानरहितत्वं वैधव्यदोषं च हन्ति नाशयति । एवमुक्तप्रकारेण इहास्मिन् जातके आर्यानुमत्या दैवज्ञसभ्यानुमतेन जातकानां गदितमखिलं योगजातं ज्ञेयम् । ग्रहाणां स्वभावविशेषाभिज्ञैरेवेदं योगजातं प्रवक्तुं क्षममिति भावः ॥ ३ ॥

लग्न वा चन्द्रमा से शुभ ग्रह या सप्तमेश सप्तम स्थान में हो तो निश्चय है कि विषकन्या दोष अनपत्य ( वन्ध्या मृतवत्सा आदि ) दोष और वैधव्य दोषों को नाश करता है। इस प्रकार इस जातकालंकार नामक ग्रन्थ में अच्छे २ ज्योतिषियों द्वारा जातकों के लिये ग्रहों के अनुसार कहे हुए योग सब ज्योतिषियों से शुभाशुभ फलादेश के विचारार्थ जानने योग्य हैं ॥ ३ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
कन्याध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो वह्निसंख्यैर्विषाख्यः ॥ ४ ॥

इति जातकालङ्कारे चतुर्थोऽध्यायः ॥ ४ ॥

---

अन्वयः—श्रीगणेशेन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोषे मञ्जुलेऽस्मिन् अलङ्काराख्ये जातके ( ग्रन्थे ) वह्निसंख्यैर्वृत्तैर्युक्तो विषकन्याध्यायः प्रणीतः ॥ ४ ॥

हृद्यैरिति । अध्यायं समापयति हृद्यैरित्यादिना ॥ ४ ॥

इति हरभानुविरचितायां जातकालङ्कारटीकायां विषकन्याध्यायश्चतुर्थः ॥ ४ ॥

श्री गणेश दैवज्ञ ने हृदय में रखने योग्य मनोहर पद्यों से सुशोभित विद्वानों को सन्तोष करने वाले इस जातकालङ्कार नामक ग्रन्थ में ३ श्लोकों से विषकन्याध्याय को बनाया ॥ ४ ॥

इति जातकालङ्कारे भावबोधिनीभाषाटीकायां विषकन्याध्यायश्चतुर्थः ।

---

## अथायुर्दायाध्यायः ॥ ५ ॥

आयुर्मूलं जन्मिनां जीवनं च ह्याजीवानां निर्जराणां सुधेव ।
एवं प्राहुः पूर्वमाचार्यवर्यास्तस्मादायुर्दायमेनं प्रवक्ष्ये ॥ १ ॥

अन्वयः—निर्जराणां सुधा इव हि आजीवानां जन्मिनामायुः मूलं जीवनम् (अस्ति) एवं पूर्वाचार्याः प्राहुः । तस्मादेनमायुर्दायाध्यायं प्रवक्ष्ये ॥ १ ॥

जिस तरह देवताओं के जीवन का मूल अमृत है उसी तरह सभी प्राणियों के जीवन का मूल आयुर्दाय है ऐसा सभी पूर्वाचार्योंने कहा है । इसलिये इस आयुर्दायाध्याय को कहते हैं ॥ १ ॥

लग्नाधीशोऽतिवीर्यो यदि शुभविहगैरीक्षितः केन्द्रयातै-
र्दद्यादायुः सुदीर्घं गुणगणसहितं श्रीयुतं मानवानाम् ।
सौम्याः केन्द्रालयस्था जनुषि च रजनीनायके स्वीयतुङ्गे
वीर्याढ्ये लग्ननाथे वपुषि च शरदां षष्टिरायुर्नराणाम् ॥ २ ॥

अन्वयः—यदि केन्द्रयातैः शुभविहगैः ईक्षितः लग्नाधीशः अतिवीर्यश्चेत्तदा मानवानां गुणगणसहितं श्रीयुतं सुदीर्घमायुः दद्यात् । जनुषि सौम्याः केन्द्रालयस्थाः (तथा) रजनीनायके च स्वीयतुङ्गे (सति) वीर्याढ्य लग्ननाथे च वपुषि नराणां शरदां षष्टिरायुः स्यात् ॥ २ ॥

लग्नाधीश इति । लग्नाधीशो लग्नस्वामी केन्द्रयातैः लग्नचतुर्थसप्तमदशमस्थैः शुभग्रहैर्दृष्टः अतिवीर्यः अधिकतरबलस्तदा जातानां मानावानां गुणगणैः सहितं गुणसमुदायैर्युतं श्रीयुतं लक्ष्मीयुतं च सुदीर्घमायुः दद्यात् । सौम्याः बुधगुरुशुक्राः स्वक्षेत्रस्थाः चन्द्रे स्वोच्चगे बलवति लग्नेशे सति जातानां नराणां षष्टिरायुर्वर्षाणां षष्टिरायुः स्यात् ॥ २ ॥

यदि केन्द्रस्थित शुभ ग्रहों से दृष्ट होकर लग्नेश पूर्ण बली हो तो मनुष्य को लक्ष्मी और गुण समूहों के सहित पूर्ण आयु को देता है । यदि शुभ ग्रह केन्द्र में हो चन्द्रमा अपनी उच्चराशि (वृष) में हो और लग्नेश बली होकर लग्न में हो तो मनुष्य ६० वर्ष की आयुवाला होता है ॥ २ ॥

सौम्याः केन्द्रालयस्था वपुषि सुरगुरौ लग्नतो वा सुधांशो-
रायुर्युक्तं न दृष्टं न च गगनगतैः सप्ततिर्वत्सराणाम् ।
याता मूलत्रिकोणे शुभगगनचराः स्वीयतुङ्गे सुरेज्ये
लग्नाधीशेऽतिवीर्ये गगनवसुसमातुल्यमायुर्नराणाम् ॥ ३ ॥

अन्वयः—लग्नतः वा सुधांशोः सौम्याः केन्द्रालयस्था वपुषि सुरगुरौ ( सति ) गगनगतैः ( क्रूरैः ) आयुः न युक्तं न च दृष्टं (तदा) नराणां वत्सराणां सप्ततिः आयुः स्यात् । शुभगगनचराः मूलत्रिकोणे याताः, सुरेज्ये स्वीयतुङ्गे, लग्नाधीशेऽतिवीर्ये तदा नराणां गगनवसुसमातुल्यमायुः स्यात् ॥ ३ ॥

सौम्या इति । लग्नाच्चन्द्राद्वा सौम्याः पूर्णचन्द्रबुधगुरुशुक्राः केन्द्रस्थास्तत्रापि गुरौ लग्नगे तत्र दशमस्थैः क्रूरैरायुरष्टमस्थानं दृष्टं युक्तं यदि न भवति तदा वत्सराणां सप्ततिरायुः स्यात् । शुभग्रहा मूलत्रिकोणस्थाः गुरौ स्वोच्चगे लग्नेशे बहुबले सति नराणां गगनवसुसंख्यमशीतिवर्षोपलक्षितमायुः स्यात् । एतेषु योगेषु गुणगणयुक्तमित्यनुपञ्जनीयम् ॥ ३ ॥

लग्न से या चन्द्रमा से शुभग्रह केन्द्र में हों तथा बृहस्पति लग्न में हो और अष्टम भाव दशम स्थान गत पापग्रह से युक्त या दृष्ट न हो तो मनुष्य ७० वर्ष की आयुवाला होता है । यदि शुभ ग्रह अपने २ मूलत्रिकोण में हों बृहस्पति अपनी उच्चराशि (कर्क) में हो और लग्नेश पूर्ण बलवान हो तो मनुष्य ८० वर्ष की आयुवाला होता है ॥ ३ ॥

सौम्ये केन्द्रेऽतिवीर्ये यदि निधनपदं खेटहीनं समाः स्यु-
स्त्रिंशत्सौम्येक्षितं चेद् गगनहिमकरैः संयुताथो स्वभे चेत् ।
स्वत्र्यंशे चामरेज्ये मुनिनयनमितं स्वर्क्षगे लग्नगे वा
चन्द्रे द्यूने शुभश्चेद्गगनरसमितं कोणगाः सौम्यखेटाः ॥ ४ ॥
कीटे लग्ने सुरेज्ये यदि भवति तदा खाष्टतुल्यं लयेशो
धर्मेऽङ्गे चाङ्गनाथे निधनभवनगे क्रूरदृष्टेऽब्धिहस्ताः ।
लग्नाधीशाष्टनाथौ लयभवनगतौ सप्तविंशद्विलग्ने
क्रूरेज्यौ चन्द्रदृष्टौ यदि निधनगतः कश्चनास्ते द्विपक्षाः ॥ ५ ॥

अन्वयः—सौम्ये अतिवीर्ये केन्द्रे ( सति ) यदि निधनपदं खेटहीनं ( तदा ) त्रिंशत् समाः स्युः । चेन्निधनपदं सौम्येक्षितं तदा गगनहिमकरैः संयुता ( त्रिंशत् ) आयुः स्यात् । अथ अमरेज्ये चेत्स्वभे स्वत्र्यंशे च मुनिनयनमितमायुः स्यात् । स्वर्क्षगे लग्नगे चन्द्रे, द्यूने शुभश्चेत्तदा गगनरसमितमायुः स्यात् । सौम्यखेटाः कोणगाः ( भवन्ति ) सुरेज्ये कीटे लग्ने यदि, तदा खाष्टतुल्यमायुः स्यात् । लयेशः धर्मे, लग्ननाथे क्रूरदृष्टे निधनभवनगे ( सति ) तदा अब्धिहस्ताः स्युः । लग्नाधीशाष्टनाथौ

लयभवनगतौ (तदा) सप्तविंशत् आयुः स्यात्। क्रूरेज्यौ विलग्ने चन्द्र ... केमन निधनगतः आस्ते ( तदा ) द्विपक्षाः स्यात् ॥ ४–५ ॥

सौम्य इति। सौम्ये बुधेऽतिबले केन्द्रस्थे सति अष्टमपदं खेटहीनं यदि तदा वर्षाणां त्रिंशदायुः स्यात्। निधनं सौम्येक्षितं चेद् गगनद्विपकरैर्दशभिः संयुता त्रिंशद्वर्षाणां चत्वारिंशदायुः स्यात्। अथ गुरौ स्वराशौ स्वद्रेष्काणे सति मुनिनयनमितं सप्तविंशद्वर्षाणि आयुः स्यात्। चन्द्रः स्वर्क्षगो लग्नगो वा सप्तमे शुभग्रहश्चेत्तदा गगनाङ्गमितं षष्टिवर्षमितमायुः स्यात्। शुभग्रहाः पञ्चमनवमस्थाः कर्कटे लग्ने सुरेज्यो यदि भवति तदा खाष्टतुल्यगशीतिवर्षतुल्यमायुः स्यादित्यग्रिमश्लोकेनान्वयः ॥ ४ ॥

कीट इति। अष्टमेशो नवमे भावे लग्नेशे क्रूरदृष्टे अष्टमगते अब्धिहस्ताश्चतुःविंशतिरायुः स्यात्। लग्नाष्टमेशौ अष्टमस्थौ यदि तदा सप्तविंशतिवर्षाण्यायुः। क्रूरसंयुतो गुरुः चन्द्रदृष्टो लग्ने यदि अन्यः कश्चिद् ग्रहः अष्टमस्थः तदा द्विपक्षा द्वाविंशतिरायुः स्यात् ॥ ५ ॥

पूर्णबली होकर बुध केन्द्र में हो और अष्टम स्थान ग्रह से रहित हो तो मनुष्य की ३० वर्ष की आयु होती है। यदि अष्टम स्थान को शुभग्रह देखता हो तो ४० वर्ष की आयु होती है। बृहस्पति अपनी राशि ( धनु मीन ) में या अपने द्रेष्काण में हो तो २७ वर्ष की आयु होती हैं। यदि चन्द्रमा अपनी राशि (कर्क) में या लग्न में हो शुभ ग्रह सप्तम स्थान में हों तो ६० वर्ष की आयु होती है। शुभग्रह नवम पंचम स्थान में हो और बृहस्पति से युक्त कर्क लग्न हो तो ८० वर्ष की आयु होती है। अष्टमेश नवमस्थान में हो और पाप ग्रह से दृष्ट होकर लग्नेश अष्टमस्थान में हो तो २४ वर्ष की आयु होती है। यदि अष्टमेश के सहित लग्नेश अष्टम में हों तो २७ वर्ष आयु होती है। पाप ग्रह के सहित बृहस्पति लग्न में हो और चन्द्रमा से दृष्ट हो तथा अष्टम स्थान में कोई ग्रह हो तो २२ वर्ष की आयु होती है ॥ ४–५ ॥

लग्नेन्दू क्रूरहीनौ वपुषि सुरगुरौ रन्ध्रभं खेटहीनं
केन्द्रे सौम्ये खशैलाः सितविबुधगुरू स्याच्छ केन्द्रगौ चेत्।
वागीशो कर्कलग्ने शतमिह भृगुजे केन्द्रगेऽथार्कसूनौ
धर्माङ्गस्थे सुधांशौ व्ययनवमगते हायनानां शतं स्यात् ॥ ६ ॥

अ०—लग्नेन्दू क्रूरहीनौ, सुरगुरौ वपुषि, रन्ध्रभं खेटहीनं सौम्ये केन्द्रे ( सति ) खशैलाः ( आयुः स्यात् )। सितविबुधगुरू केन्द्रगौ चेत् शतम् ( आयुः ) स्यात्। वागीशे कर्कलग्ने भृगुजे केन्द्रे केन्द्रगे ( सति ) इह शतं ( स्यात् ) । अथार्कसूनौ धर्माङ्गस्थे सुधांशौ व्ययनवमगते हायनानां शतम् ( आयुः ) स्यात् ॥ ६ ॥

लग्नेन्द्विति। लग्नचन्द्रौ क्रूरग्रहयोगरहितौ, लग्ने गुरौ, अष्टमं ग्रहरहितं केन्द्रे शुभग्रहे यदि तदा खशैलाः सप्ततिः। शुक्रबृहस्पती केन्द्रगौ चेत् शतं वर्षाणि। गुरौ कर्कलग्ने, भृगुजे केन्द्रगे च शतं वर्षाणि। एते विशिष्टयोगा इत्यर्थः। योगस्य वैशिष्ट्यं यशः-सम्पत्सूचकमिति भावः। अथ शनौ नवमगे लग्नस्थे वा चन्द्रे व्यय-नवमगते वर्षाणां शतमायुः स्यात् ॥ ६ ॥

लग्न और चन्द्रमा पापग्रह के सम्बन्ध से रहित हों, लग्न में बृहस्पति हो, अष्टम स्थान ग्रह से रहित हो और केन्द्र में शुभग्रह हो तो ७० वर्ष की आयु होती है। शुक्र और गुरु यदि लग्न में हों तो १०० वर्ष की आयु होती है। बृहस्पति से युत कर्क लग्न हो शुक्र केन्द्र में हो तो १०० वर्ष की आयु होती है। यदि शनि नवें या लग्नस्थान में हो, चन्द्रमा द्वादश या नवम स्थान में हो तो १०० वर्ष की आयु होती है ॥ ६ ॥

धीकेन्द्रायुर्नवस्था यदि खलखचरा नो गुरोर्भे विलग्ने
केन्द्रे काव्ये गुरौ वा शुभमपि निधनं सौम्यदृष्टं शतं स्यात्।
लग्नादिन्द्वोर्न खेटा यदि निधनगता वीर्यभाजौ सितेज्यौ
पूर्णायुः स्वीयराशौ शुभगगनचराः षष्टिरङ्गोच्चगेऽब्जे ॥ ७ ॥

अ०,—यदि खलखचरा धीकेन्द्रायुर्नवस्था नो भवेयुः गुरोर्भे विलग्ने, केन्द्रे काव्ये गुरौ वा शुभमपि निधनं सौम्यदृष्टम् (तदा) शतम् (आयुः) स्यात्। लग्नादिन्द्वोः खेटा यदि निधनगताः न, सितेज्यौ वीर्यभाजौ (चेत्तदा) पूर्णायुः स्यात्। शुभगगनचराः स्वीयराशौ अब्जेऽङ्गोच्चगे (सति) षष्टिः आयुः स्यात् ॥ ७ ॥

धीति। क्रूरग्रहाः पञ्चमकेन्द्राष्टमनवमस्थाः नो भवेयुः धनुर्मीने लग्ने केन्द्रे शुक्रे गुरौ वा, नवमाष्टमं च शुभग्रहावलोकितं यदि तदा शतवर्षाण्यायुः स्यात्। लग्नाच्चन्द्राच्च ग्रहा अष्टमस्था न स्युः शुक्रगुरू बलवन्तौ तदा पूर्णायुः व्योमार्क-१२० वर्षायुः स्यात्। शुभग्रहाः स्वराशिस्थाः वृषे लग्ने वा चन्द्रे सति वर्षाणां षष्टिरायुः स्यात् ॥ ७ ॥

पञ्चम केन्द्र ( १।४।७।१० ) अष्टम और नवम स्थान पाप ग्रह से रहित हो, धनु या मीन लग्न हो केन्द्र में बृहस्पति या शुक्र हो, नवम और अष्टम स्थान शुभ ग्रह से दृष्ट हो तो १०० वर्ष की आयु होती है। लग्न से या चन्द्रमा से यदि अष्टम स्थान में कोई ग्रह न हो, शुक्र और बृहस्पति बलवान् हों तो जातक पूर्णायु होता है। यदि शुभग्रह अपनी २ राशि में हों और वृष लग्न में चन्द्रमा हो तो ६० वर्ष की आयु होती है ॥ ७ ॥

कोदण्डान्त्याधमंगं यदि सकलखगाः स्वोच्चगा ज्ञे जिनांशे-
गोस्थे पूर्णं च केन्द्रे सुरपतिभृगुजौ लाभगेऽब्जे परायुः।

शुक्रे मीने तनुस्थे निधनगृहगते सौम्यदृष्टे सुधांशौ
जीवे केन्द्रे शतं स्यादथ तनुगृहपे छिद्रगे पुष्करेऽब्जे ॥ ८ ॥
वागीशे वीर्ययुक्ते नवमभवनगाः सर्वखेटाः शतायुः
कर्केऽङ्गे जीवचन्द्रौ सहजरिपुभवे सत्कविज्ञौ च केन्द्रे।
केन्द्रे सूर्यारमन्दा गुरुनवलवगा वाक्पतौ लग्नयाते
व्ययष्ठस्थानेषु|शेषाः शरगजतुलितं स्यान्नराणां तदायुः ॥ ९ ॥

अन्वयः—कोदण्डान्त्यार्धअंगं, ज्ञे जिनांशैः गोस्थे यदि सकलखगाः स्वोच्चगाः (तदा) पूर्णम् (आयुः स्यात्)। सुरपतिभृगुजौ केन्द्रे, अब्जे लाभगे च, परायुः (स्यात्)। शुक्रे मीने तनुस्थे, सुधांशौ सौम्यदृष्टे निधनगृहगते, जीवे केन्द्रे शतआयुः स्यात्। अथ तनुगृहपे छिद्रगे, अब्जे पुष्करे, वागीशे वीर्ययुक्ते, यदि नवमभवनगाः सर्वखेटास्तदा शतायुः स्यात्। कर्केऽङ्गे, जीवचन्द्रौ सहजरिपुभवे, सत्कविज्ञौ केन्द्रे च, शतायुः (स्यात्)। गुरुनवलवगा सूर्यारमन्दाः केन्द्रे, वाक्पतौ लग्नयाते, शेषाः व्ययष्ठस्थानेषु स्थितास्तदा नराणां शरगजतुलितमायुः स्यात् ॥ ८–९ ॥

कोदण्डेति। कोदण्डस्यान्त्यार्धलग्ने धनुर्लग्नद्वितीयहोरायां बुधे जिनांशैर्वृषस्थे अन्ये सर्वे ग्रहाः स्वोच्चगाः तदा पूर्णमायुः स्यात्। गुरुशुक्रौ केन्द्रे सति लाभगे चन्द्रे परायुः पूर्णायुः। शुक्रे मीनलग्नगे सौम्यग्रहदृष्टे चन्द्रे अष्टमस्थे, गुरौ केन्द्रे सति वर्षाणां शतमायुः स्यात्। अथवा तनुगृहपे इत्यग्रिमश्लोकेनान्वयः ॥ ८ ॥

वागीश इति। लग्नपेऽष्टमस्थे चन्द्रे दशमस्थे गुरौ बल॰ति अन्ये ग्रहाः नवमभवनगाः तदा शतायुः। कर्के लग्ने चन्द्रजीवौ तृतीयषष्ठैकादशे शुभग्रहयुक्तौ शुक्रबुधौ च केन्द्रे यदि तदापि शतायुः। शतायुरिति देहलीदीपकन्यायेनोभयत्रान्वेति। रविभौमशनयः गुरुनवमांशस्थाः केन्द्रे स्युः लग्नस्थे गुरौ, शेषाः अष्टमरहितभावस्थाः तदा नाराणां शरगजतुलितं पंचाशीतिवर्षमितमायुः स्यात् ॥ ९ ॥

धनु के उत्तरार्ध (१५ अंश के बाद) में लग्न हो बुध २४ अंशों में वृष राशि में हो और शेष (रवि चन्द्रमा मंगल बृहस्पति शुक्र और शनि) ग्रह अपने २ उच्चराशि में हों तो पूर्णायु होती है। बृहस्पति शुक्र केन्द्र में हों और चन्द्रमा एकादश स्थान में हो तो पूर्णायु होती है। शुक्र से युक्त मीन लग्न शुभग्रह से दृष्ट हो, चन्द्रमा अष्टम स्थान में हो और बृहस्पति केन्द्र में हो तो १०० वर्ष की आयु होती है। या लग्नेश अष्टम स्थान में हो, चन्द्रमा दशम स्थान में हो, बृहस्पति बली हो और लग्नेश चन्द्रमा तथा बृहस्पति को छोड़ कर शेष सभी ग्रह नवम स्थान में हों तो १०० वर्ष की आयु होती है। कर्क लग्न हो बृहस्पति और चन्द्रमा तृतीय षष्ठ या एकादश स्थान में हों शुक्र और बुध केन्द्र में हों तो १०० वर्ष की आयु होती है। बृहस्पति के नवांश में

होकर सूर्य मंगल और शनि केन्द्र हों, बृहस्पति लग्न में हो और शेष ग्रह (चन्द्रमा बुध और शुक्र) ग्रह अष्टम स्थान से अन्यत्र स्थानों में हों तो ८९ वर्ष की आयु होती है ॥ ८-९ ॥

क्रूराः सौम्यांशयाता उपचयगृहगाः कातराः कण्टकस्थाः
सौम्या व्योमार्कसंख्यं यदि तनुपकुजौ रन्ध्रगौ नो परायुः ।
केन्द्रे लग्नेशजीवौ नवसुतनिधने कण्टके नो खलाख्याः
संपूर्णं पापखेटा यदि गुरुजलगा जीवभावे च सौम्याः ॥ १० ॥
युग्मर्क्षांशे गता वा व्ययधनगृहगाश्चेच्छुभाः शीतभानुः
सपूर्णो लग्नयायी शतमिह जनिनामिन्दिरामन्दिरं स्यात् ।
लग्नेशे सौम्ययुक्ते वपुषि च लयपे रन्ध्रगे नान्यदृष्टे
विंशत्केन्द्रे लयेशे बलवियुजि तथा लग्नपे त्रिंशदायुः ॥ ११ ॥

अन्वयः—सौम्यांशयाताः क्रूराः उपचयगृहगाः, कातराः सौम्याः कण्टकस्थाः (तदा) व्योमार्कसंख्यमायुः स्यात् । यदि तनुपकुजौ रन्ध्रगौ (तदा) नो परायुः स्यात् । लग्नेशजीवौ केन्द्रे खलाख्याः नवसुतनिधने कण्टके नो तदा संपूर्णायुः स्यात् । यदि पापखेटा गुरुजलगाः, सौम्याः जीवभावे च, वा शुभाः युग्मर्क्षांशे गताः सन्तः व्ययधनगृहगाः, संपूर्णः शीतभानुः लग्नयायी, चेत्तदा इह जनिनामिन्दिरामन्दिरं शतम् (आयुः) स्यात् । सौम्ययुक्ते लग्नेशे वपुषि, लयपे रन्ध्रगे नान्यदृष्टे 'तदा' विंशत् आयुः स्यात् । बलवियुजि लयेशे लग्नपे च केन्द्रे त्रिंशत् आयुः स्यात् ॥ १०-११ ॥

क्रूरा इति । शुभग्रहनवांशस्थाः क्रूराः उपचयस्थाः त्रिषट्दशमायस्थाः कातरा भीरवः युद्धे पराजिता इति यावत्, शुभग्रहाः कंटकस्थाः केन्द्रस्थाः तदा व्योमार्कसंख्यं विंशदधिकं शतं वर्षाणि आयुः परायुः स्यात् । परायुर्योगेषु लग्नेशकुजौ अष्टमस्थौ चेत्तदा नो परायुः परायुर्न भवतीत्यर्थः । लग्नेशगुरू केन्द्रस्थौ क्रूरास्त्रिकोणाष्टमकेन्द्रवर्जिताश्चेत्तदा पूर्णायुः स्यात् । क्रूरग्रहाः गुरुजलगा नवमचतुर्थगाः शुभाः जीवनवांशस्थाः यद्वा समराशिनवांशस्थाः सन्तः व्ययधनगृहगाः शुभाः पूर्णचन्द्रः लग्नस्थः इह योगे जातानां शतं वर्षाण्यायुः । कथंभूतमिन्दिरामन्दिरं संपदा सहितमिति अग्रिमश्लोकपूर्वार्द्धेन सम्बन्धः ॥ १० ॥

युग्मेति । शुभग्रहयुक्ते लग्नेशे लग्ने अन्यग्रहैर्न दृष्टेऽष्टमेशेऽष्टमगते सति वर्षाणां विंशतिरायुः स्यात् । अष्टमेशे लग्नेशे च केन्द्रस्थे बलरहिते च सति त्रिंशद्वर्षाण्यायुः स्यात् ॥ ११ ॥



पापग्रह, शुभग्रह के नवांश में होकर लग्न से उपचय गृह (३।६।१०।११) में

हों और कायर ( युद्ध में पराजित ) शुभ ग्रह केन्द्र में हों तो १२० वर्ष की आयु होती है। इस योग में यदि लग्नेश और मङ्गल आठवे हों तो पूर्णायु ( परमायु ) नहीं होती है। लग्नेश और बृहस्पति केन्द्र में हों और नवम पञ्चम तथा अष्टम स्थान में कोई भी पाप ग्रह नहीं हो तो संपूर्णायु ( १२० वर्ष ) होती है। यदि पाप ग्रह नवम और चतुर्थ में हों और शुभ ग्रह बृहस्पति के नवांश में या सम राशि के नवांश में होकर द्वादश या द्वितीय स्थान में हों और पूर्ण चन्द्रमा लग्न में हो तो सभी सम्पत्तियों से युक्त होकर मनुष्य १०० वर्ष की आयुवाला होता है। शुभ ग्रह से युक्त लग्नेश लग्न में हो और अष्टमेश अष्टम स्थान में हो अन्य ग्रहों की दृष्टि से रहित हो तो २० वर्ष की आयु होती है। बलहीन होकर लग्नेश और अष्टमेश यदि केन्द्रगत हों तो ३० वर्ष की आयु होती है ॥ १०–११ ॥

इन्दावापोक्लिमस्थे तदनु तनुपतौ निर्बले पापदृष्टे
दन्तैस्तुल्यं ततोऽर्कः खलखगविवरे लग्नगोऽब्जत्रिसंख्यम्।
रिःफे केन्द्रे सुरेज्ये गुरुरिपुसहजे स्यात्सपापेऽङ्गनाथे
रामाब्दं कर्कलग्ने कुजतुहिनकरौ केन्द्ररन्ध्रं ग्रहोनम्॥ १२॥
रामाब्दं स्याल्लयेशे वपुषि च निधनं सौम्यहीनं खवेदाः
लग्नेशो रन्ध्रयातो वपुषि निधनपः स्यान्नृणां बाणसंख्यम्।
नक्रे तिग्मांशुमन्दौ सहजरिपुगतौ कण्टके रन्ध्रनाथे
पारावाराब्धिसंख्यं तदनु शुभखगाः सल्लवर्त्तेऽत्र खाग्निः ॥१३॥

अन्वयः—इन्दौ तदनु तनुपतौ निर्बले आपोक्लिमस्थे पापदृष्टे दन्तैस्तुल्यम् (आयुः स्यात् )। ततः खलखगविवरे लग्नगः अर्कश्चेत्तदा अब्जत्रिसंख्यम् ( आयुः स्यात् )। सुरेज्ये रिःफे ( वा ) केन्द्रे, सपापेऽङ्गनाथे गुरुरिपुसहजे रामाब्दं स्यात्। कुजतुहिनकरौ कर्कलग्ने केन्द्ररन्ध्रं ग्रहोनं ( चेत्तदा ) रामाब्दमायुः स्यात्। लयेशे वपुषि सति, निधनं सौम्यहीनं खवेदाः ( स्युः )। लग्नेशः रन्ध्रयातः निधनपः वपुषि (चेत्तदा) नृणां बाणसंख्यम् आयुः। तिग्मांशुमन्दौ नक्रे सहजरिपुगौ रन्ध्रनाथे कण्टके (सति) पारावाराब्धिसंख्यम् (आयुः स्यात्)। तदनु शुभखगाः सल्लवर्त्ते अत्र खाग्निः आयुः स्यात् ॥ १२–१३ ॥

इन्दाविति। चन्द्रे आपोक्लिमस्थे तृतीयषष्ठनवमद्वादशगते, तनुपतौ लग्नेशे आपोक्लिमस्थे उभये निर्बले क्रूरदृष्टे च सति दन्तैस्तुल्यं द्वात्रिंशद्वर्षाण्यायुः स्यात्। क्रूरग्रहयोरन्तरे लग्नगोऽर्कश्चेत्तदाऽब्जत्रिसंख्यमेकत्रिंशद्वर्षाण्यायुः। गुरौ द्वादशे केन्द्रे वा सपापे लग्ननाथे नवमषष्ठतृतीये सति रामाब्दं त्रीणि वर्षाण्यायुः। कर्कलग्ने चन्द्रभौमौ, केन्द्राणि अष्टमभवनं च ग्रहरहितं यदि तदा रामाब्दं स्यादिति श्लोकमस्थेनान्वयः॥ १२ ॥

**रामाब्दमिति ।** अष्टमेशे लग्नगते, अष्टमभवनं शुभग्रहरहितं सवेदाश्चत्वारिंशद्वर्षाण्यायुः स्यात् । लग्नेशेऽष्टमगेऽष्टमेशे च लग्नगाते नृणां बाणसंख्यं पञ्चवर्षाण्यायुः स्यात् । मकरस्थौ शनिरवी तृतीयषष्ठगौ अष्टमेशे केन्द्रगे पाराबाराब्धिसंख्यं चतुश्चत्वारिंशद्वर्षाण्यायुः स्यात् । तदनु शुभग्रहाः स्वस्ववर्क्षे शुभग्रहनवांशे राशौ वाऽत्र त्रिंशद्वर्षाण्यायुः स्यात् ॥ १३ ॥

चन्द्रमा और लग्नेश बलहीन होकर आपोक्लिम स्थान (३।६।९।१२) में हों और पाप ग्रह से दृष्ट हों तो २२ वर्ष की आयु होती है। लग्नेश दो पाप ग्रहों के मध्य में हो तो ३० वर्ष की आयु होती है। बृहस्पति द्वादश स्थान में हो या केन्द्र में हो, पाप ग्रह से युक्त होकर लग्नेश तृतीय षष्ठ या नवम स्थान में हो तो ३ वर्ष की आयु होती है। यदि चंद्रमा और मंगल के संहित कर्क लग्न हो और केन्द्र (१।४।७।१०) तथा अष्टम स्थान शुद्ध हों (माने शुभ या पाप ग्रह से रहित हों) तो ३ वर्ष की आयु होती है। यदि अष्टमेश लग्न में हो, अष्टम भाव शुभ ग्रह से रहित हो तो ४० वर्ष की आयु होती है। यदि लग्नेश अष्टम स्थान में हो और अष्टमेश लग्न में हो तो ५ वर्ष की आयु होती है। यदि सूर्य और शनि मकर राशि में होकर तृतीय या षष्ठ भाव में हों अष्टमेश केन्द्र में हो तो मनुष्य ४४ वर्ष की आयु वाला होता है। उसी योग में यदि शुभ ग्रह शुभ ग्रह की राशि में या शुभ ग्रह के नवांश में हों तो ३० वर्ष की आयु होती है ॥ १२–१३ ॥

क्रूरैर्दृष्टेऽङ्गनाथे यदि शुभविहगा वीर्यवन्तः सुधांशौ
संस्थे सौम्ये गणे चेद्गुणमुनितुलितं रन्ध्रगैर्मध्यमायुः ।
स्याच्चन्द्रादह्नि पापैरथ तपनसुते द्व्यङ्गलग्ने हि याते
रिःफेशे रन्ध्रनाथे यदि बलरहिते कङ्कपत्राक्षिसंख्यम् ॥ १४ ॥

अ०—यदि अङ्गनाथे क्रूरैः दृष्टे शुभविहगा वीर्यवन्तः (तथा) सुधांशौ सौम्ये गणे संस्थे चेत् गुणमुनितुलितमायुः स्यात् । अह्नि चन्द्रात् रन्ध्रगैः पापैः मध्यमायुः स्यात् । अथ तपनसुते द्व्यङ्गलग्ने याते यदि रिःफेशे रन्ध्रनाथे बलरहिते हि कङ्कपत्राक्षिसंख्यमायुः स्यात् ॥ १४ ॥

**क्रूरैरिति ।** लग्नेशे क्रूरदृष्टे शुभग्रहाः बलिनः, चन्द्रे शुभवर्गगे क्वापि भावे स्थिते सति गुणमुनितुलितं त्रिसप्ततिवर्षतुल्यमायुः स्यात् । चन्द्रादष्टमगैः पापैः दिवा जन्मनि मध्यमायुः स्यात् । अथ शनौ द्व्यङ्गे द्विःस्वभावसंज्ञके लग्ने स्थिते, द्वादशभावनाथे अष्टमनाथे च बलहीने सति कङ्कपत्राक्षिसङ्ख्यं पंचविंशतिवर्षाण्यायुः स्यात् ॥ १४ ॥

लग्नेश पाप ग्रह से दृष्ट हो शुभ ग्रह बलवान हो तथा चन्द्रमा शुभ ग्रह के षड्वर्ग में हो तो ७३ वर्ष की आयु होती है। दिन में जन्म हो, पाप ग्रह चन्द्रमा

से अष्टम स्थान में हों तो मध्यमायु होती है। यदि शनि द्विःस्वभाव लग्न में हो अष्टमेश और द्वादशेश बलहीन हो तो २९ वर्ष की आयु होती है ॥ १४ ॥

कर्केऽङ्गे सप्तसप्तौ खलविहगयुते पुष्करस्थे द्विजेशे
केन्द्रे याते सुरेज्ये शरविशिखमितं पुष्करे नीरगे वा ।
सौम्ये पीयूषभानौ व्ययनिधनगते देहगे वा कवीज्या-
वेकर्क्षे व्योमबाणैर्व्ययरिपुनिधने लग्ननाथाढ्यचन्द्रे ॥ १५ ॥

अ०—सप्तसप्तौ खलविहगयुते कर्केऽङ्गे, द्विजेशे पुष्करस्थे, सुरेज्ये केन्द्रयाते शरविशिखमितमायुः स्यात्। सौम्ये पुष्करे वा नीरगे, पीयूषभानौ व्ययनिधनगते वा देहगे, कवीज्यौ एकर्क्षे ( चेत्तदा ) व्योमबाणै समम्‌आयुः स्यात् । लग्ननाथाढ्यचन्द्रे व्ययरिपुनिधने लग्ननाथे शन्यंशे भुजगशरमितमायुः स्यात् इत्यग्रिमस्थेनान्वयः ॥१५॥

कर्केऽङ्ग इति । सूर्ये कर्कलग्ने क्रूरयुते, चन्द्रे दशमगते, गुरौ केन्द्रस्थे शरविशिखमितं पञ्चपञ्चाशद्वर्षमितमायुः स्यात् । बुधे दशमे चतुर्थगे वा चन्द्रे व्ययेऽष्टमे लग्ने वा शुक्रगुरू एकराशिगौ क्वापि स्थितौ चेत्तदा व्योमबाणैः समं पञ्चाशद्वर्षमितमायुः स्यात् । लग्नेशयुक्ते चन्द्रे द्वादशषष्ठाष्टमे लग्नेशे शन्यंशे शनिनवांशगे भुजगशरमितमष्टपञ्चाशन्मितमायुः स्यादित्यग्रिमश्लोकेनान्वयः ॥ १५ ॥

पापग्रह से युक्त होकर सूर्य कर्क लग्न में हो चन्द्रमा दशम स्थान में हो और बृहस्पति केन्द्र में हो तो ५५ वर्ष की आयु होती है। बुध दशम स्थान में या चतुर्थ में हो, चन्द्रमा द्वादश या अष्टम या लग्न में हो और बृहस्पति तथा शुक्र एक राशि में हों तो ५० वर्ष की आयु होती है। चन्द्रमा लग्नेश के सहित द्वादश, षष्ठ या अष्टम स्थान में हों, लग्नेश शनि के नवांश में हो तो ५८ वर्ष की आयु होती है, ( इसका अग्रिम श्लोक से सम्बन्ध है ) ॥ १५ ॥

शन्यंशे लग्ननाथो भुजगशरमितं स्यादथो सौम्यखेटा
रन्ध्रोना देहनाथो व्ययरिपुनिधने पापयुक् षष्टिरायुः ।
राशीशो लग्ननाथो दिनमणिसहितो मृत्युगो वाक्पतिश्चे-
न्नो केन्द्रो षष्टिरायुर्वपुषि दिनपतिः शत्रुभौमान्वितश्चेत् ॥ १६ ॥

अ०—अथ सौम्यखेटा रन्ध्रोनाः, पापयुक् देहनाथो व्ययरिपुनिधने तदा षष्टिः आयुः ( स्यात् )। दिनमणिसहितो राशीशो लग्ननाथो मृत्युगो वाक्पतिः ( च ) केन्द्र नो चेत्तदा षष्टिरायुः स्यात् । शत्रुभौमान्वितः दिनपतिः वपुषि चेत् वागीशे हीनवीर्ये, यामिनीशे व्ययतनुअगते खशैलाः ( आयुः स्यात् इत्यग्रिमश्लोकेनान्वयः ) ॥ १६ ॥

शन्यंश इति । शुभग्रहाः अष्टमव्यतिरिक्तभावस्थाः लग्नेशः पापयुक्तः त्रिकस्थस्तदा षष्टिवर्षमायुः स्यात् । सूर्यसहितलग्ननाथो राशीशः लग्नेशश्च मृत्युगः, गुरुः

केन्द्रगो न चेत् षष्टिवर्षाण्यायुः स्यात्। निजशत्रुभौमार्भ्यां युक्तः सूर्यो लग्ने गुरौ बलहीने, चन्द्रे व्ययपञ्चमस्थे खशैलाः सप्ततिवर्षाण्यायुः स्यादित्यग्रिमश्लोकेनान्वयः ॥

शुभग्रह अष्टम के अतिरिक्त स्थान में हों, पापग्रह के सहित लग्नेश द्वादश अष्टम या षष्ठ स्थान में हो तो ६० वर्ष की आयु होती है। सूर्य के सहित जन्मराशि का का स्वामी और जन्मलग्न का स्वामी अष्टम स्थान में हों तथा बृहस्पति केन्द्र से अन्यत्र किसी स्थान में हो तो भी ६० वर्ष की आयु होती है। शुक्र शनि और मंगल के सहित सूर्य यदि लग्न में हो बृहस्पति हीन बली हो और चन्द्रमा द्वादश या पञ्चम भाव में हो तो ७० वर्ष की आयु होती है (इसका सम्बन्ध आगे के श्लोक से है)॥१६॥

वागीशे हीनवीर्ये व्ययतनुजगते यामिनीशे खशैला
धर्मे सर्वैः परायुः खलखगलवगैः केन्द्रयातैरशीतिः।
क्रूरैः क्रूर्क्षयातैः शुभभवनगतैः सौम्यखेटैः सवीर्ये
लग्नेशे स्यात्परायुः सुतभवनगतैः षष्टिरायुर्नराणाम् ॥ १७ ॥

अन्वयः—सर्वैः धर्मे परायुः स्यात्। तथा सर्वैः खलखगलवगैः केन्द्रयातैः अशीतिः आयुः स्यात्। क्रूरैः क्रूर्क्षयातैः सौम्यखेटैः शुभभवनगतैः लग्नेशे सवीर्ये (तदा) परायुः स्यात्। तैः सुतभवनगतैः नराणां षष्टिः आयुः स्यात् ॥ १७ ॥

वागीश इति। सर्वैः ग्रहैः धर्मे नवमे सद्भिः परायुः दीर्घायुः स्यात्। खलखगलवगैः केन्द्रयातैः सर्वैरशीतिरशीतिवर्षाण्यायुः स्यात्। क्रूरैः क्रूर्क्षगतैः, शुभैः शुभगृहगतैः, लग्नपतौ सबले परायुः स्यात्। सुतभवनगतैः सर्वैः नराणां षष्टिवर्षाण्यायुः स्यात् ॥ १७ ॥

यदि सभी ग्रह नवम स्थान में हों तो पूर्णायु होती है। यदि सभी ग्रह पापग्रह के नवांश में होकर केन्द्र (१।४।७।१०) में हों तो ८० वर्ष की आयु होती है। यदि पाप राशि में पापग्रह, शुभराशि में शुभग्रह हों और लग्नेश पूर्ण बली हो तो पूर्णायु होती है। यदि सभी ग्रह पञ्चम स्थान में हों तो ६० वर्ष की आयु होती है ॥ १७ ॥

सारङ्गस्यान्त्यभागे यदि वपुषि गते चाद्यभागे च केन्द्रे
सौम्यैः खेटैः शतं स्याद्वसुसहजसुखे स्याच्चिरायुः समस्तैः।
लग्नात्प्रालेयभानोर्निधनसदनपे रिःफकेन्द्रेऽष्टविंशत्
केन्द्रे सौम्यग्रहोने यदि मृतिभवने कश्चिदास्ते खरामाः ॥ १८ ॥

अ०—यदि सारङ्गस्य अन्त्यभागे वपुषि गते सौम्यैः खेटैः केन्द्रे गतैः शतं स्यात्। समस्तैः वसुसहजसुखे चिरायुः स्यात्। लग्नात् प्रालेयभानोः निधनसदनपे रिःफकेन्द्रेऽष्टविंशत् आयुः स्यात्। यदि सौम्यग्रहोने केन्द्र, कश्चिन्मृतिभवने आस्ते तदा खरामाः स्युः ॥ १८ ॥

**सारङ्गेति।** धनुर्धरराश्यन्त्यनवांशे लग्नगे शुभैः प्रथमनवांशस्थैः केन्द्रगैर्वर्षाणां शतमायुः स्यात्। तृतीयचतुर्थाष्टमस्थैः सर्वैर्चिरायुः स्यात्। लग्नाचन्द्राच्च अष्टमेशे व्ययकेन्द्रस्थे अष्टाविंशतिवर्षाण्यायुः स्यात्। केन्द्रे शुभग्रहरहिते अष्टमस्थश्चेत्कश्चिद्ग्रहस्तदा खरामास्त्रिंशद्वर्षाण्यायुः स्यात् ॥ १८ ॥

धनुराशि का अन्तिम नवांश लग्न में हो और शुभ ग्रह केन्द्र में हों तो १०० वर्ष की आयु होती है। यदि सभी ग्रह अष्टम तृतीय और चतुर्थ गत हों तो दीर्घायु होती है। यदि लग्न से या चन्द्रमा से अष्टमेश द्वादश स्थान में या केन्द्र में हो तो २८ वर्ष की आयु होती है। यदि केन्द्र में कोई भी शुभग्रह न हो और अष्टम भाव में कोई ग्रह हो तो ३० वर्ष की आयु होती है ॥ १८ ॥

क्षीणे प्रालेयभानौ यदि खलखचरो मृत्युगो मृत्युनाथः
केन्द्रस्थो लग्ननाथो निजबलरहितः खाश्वितुल्यं तदायुः।
सौम्यैरापोक्लिमस्थैर्दिनमणिजविधू वैरिरन्ध्रालयस्थौ
तुल्यं कामाङ्कुशैः स्यादथ धनमृतिगौ रिःफगौ पापखेटौ ॥ १९ ॥
हीनौ स्वर्भानुना वा यदि हिममहसा व्योमनेत्रप्रमाणं
केन्द्रस्थौ सूर्यमन्दौ यदि वपुषि कुजः पुष्पबाणाङ्कुशं स्यात्।
शुक्रेज्यावङ्गयातौ तनयभवनगौ भौमपापावनायु-
र्जन्मेशः सार्कलग्ने खलशुभसहितश्चेक्षितः स्यादनायुः ॥ २० ॥

अ०—प्रालेयभानौ क्षीणे यदि खलखचरः मृत्युगः मृत्युनाथः केन्द्रस्थः लग्ननाथः निजबलरहितः, तदा खाश्वितुल्यमायुः स्यात्। सौम्यैः आपोक्लिमस्थैः दिनमणिजविधू वैरिरन्ध्रालयस्थौ ( चेत्तदा ) कामाङ्कुशैः तुल्यं स्यात्। अथ स्वर्भानुना यदि वा हिममहसा हीनौ पापखेटौ धनमृतिगौ रिःफगौ ( चेत्तदा ) व्योमनेत्रप्रमाणम् ( आयुः स्यात् )। यदि सूर्यमन्दौ केन्द्रस्थौ वपुषि कुजस्तदा पुष्पबाणांकुशमायुः स्यात्। शुक्रेज्यौ अङ्गयातौ, भौमपापौ तनयभवनगौ तदा अनायुः स्यात्। खलशुभसहितश्चेक्षितः जन्मेशः सार्कलग्ने तदा अनायुः स्यात् ॥ १९–२० ॥

**क्षीण इति।** चन्द्रे क्षीणे सति क्रूरग्रहोऽष्टमस्थो मृत्युभावेशः केन्द्रस्थः लग्नेशो निर्बलस्तदा खाश्वितुल्यं विंशतिवर्षाण्यायुः स्यात्। शुभग्रहैः आपोक्लिमगतैः शनिचन्द्रौ षष्ठाष्टमस्थौ तदा कामांकुशैर्नखैस्तुल्यं विंशतिवर्षाण्यायुः स्यात्। अथेत्यग्रिमश्लोकेनान्वयः ॥ १९ ॥

**हीनाविति।** अथ राहुचन्द्ररहितौ क्रूरग्रहौ द्वितीयाष्टद्वादशगौ तदा व्योमनेत्रप्रमाणं विंशतिसंख्यमायुः। सूर्यशनी केन्द्रगौ कुजो लग्नगस्तदा पुष्पबाणांकुशं विंश-

द्वर्षाण्यायुः स्यात्। शुक्रगुरू लग्नस्थौ भौमपापौ पञ्चमस्थौ तदा अनायुः अल्पायुः स्यात्। सूर्ययुते लग्ने जन्मेशः जन्मराशीशः अन्यैर्युतो दृष्टश्चेत्तदा अनायुः अल्पायुः स्यात् ॥ २० ॥

जिस के जन्मकाल में क्षीण चन्द्रमा हो, पापग्रह अष्टम स्थान में हों, और अष्टमेश केन्द्र में हो तथा लग्नेश बलरहित हो उसकी २० वर्ष की आयु होती है। यदि शुभ-ग्रह आपोक्लिम (३।६।९।१२) स्थान में हों, शनि और चन्द्रमा षष्ठ और अष्टम स्थान में हों तो २० वर्ष की आयु होती है। यदि राहु और चन्द्रमा से रहित पाप ग्रह द्वितीय अष्टम और द्वादश स्थान में हों तो २० वर्ष की आयु होती है। सूर्य और शनि केन्द्र में हों और मंगल लग्न में हो तो २० वर्ष की आयु होती है। यदि शुक्र और बृहस्पति लग्न में हों पाप ग्रह से युक्त मंगल पंचम स्थान में हों तो अल्पायु होता है। सूर्य के सहित जन्मराशि का स्वामी यदि लग्न में हो तथा पापग्रह या शुभग्रह से दृष्ट हो तो अल्पायु होता है ॥ १९–२० ॥

यत्संप्रोक्तं योगजं पूर्वमायुर्होरापारावारपारङ्गमज्ञैः।
तस्मादायुः सारभूतं यदेतत्पुण्याचारश्लोकभाजां नराणाम् ॥ २१ ॥

अ०—होरापारावारपारङ्गमज्ञैः पूर्वं योगजमायुः यत्संप्रोक्तं तस्मात् सारभूतं यदेतदायुः तत् पुण्याचारश्लोकभाजां नराणां घटते ॥ २१ ॥

यदिति। जातकशास्त्रसमुद्रोत्तीर्णैः समस्तजातकशास्त्रज्ञैरित्यर्थः, पूर्वं यद्योगजमायुः प्रोक्तं प्रणीतं तस्मात्पूर्वोक्तात् सारभूतं दृढांशभूतमायुर्यदेतदुक्तं तत्पुण्याचारश्लोकभाजां सदाचारोपलक्षितधर्मयशोयुक्तानां नराणां 'घटते' इत्यध्याहारः ॥ २१ ॥

होरा शास्त्र रूप समुद्र में पारङ्गत (याने सम्पूर्ण जातकशास्त्र को जानने वाले) दैवज्ञों ने जो पहले जातक के लिये योग से जायमान आयुर्दाय कहा है उसका सारांश यहां कहा गया है। यह सारांश वाले योग से जायमान आयुर्दाय पुण्यशील, आचारशील, यशस्वी मनुष्य ही प्राप्त करता है; अन्य कोई नहीं ॥ २१ ॥

बलाबलविवेकेन पुष्करालयशालिनाम्।
सुमनोभिरिदं देश्यमायुर्धर्मादिशालिनाम् ॥ २२ ॥

अ०—पुष्करालयशालिनां बलाबलविवेकेन धर्मादिशालिनाम् इदं आयुः सुमनोभिः आदेश्यम् ॥ २२ ॥

बलेति। पुष्करालयशालिनां सूर्यादिग्रहाणां बलाबलविचारेण सुमनोभिरिदमायुः कथनीयं धर्मादिशालिनां भवति पापकर्मणां न भवतीति अर्थात् सिद्धम् ॥२२॥

सूर्यादि ग्रहों के बलाबल के अनुसार विचार करके धर्मशील सदाचारी और यशस्वी प्राणियों के लिये इस आयुर्दाय का आदेश करना चाहिये; क्योंकि दुराचारी मनुष्य अधिक आयुर्दाय होते हुये भी अल्पायु होता है ॥ २२ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
आयुर्दायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तो वाहुपक्षैः प्रणीतः ॥ २३ ॥
इति जातकालङ्कारे पञ्चमोऽध्यायः ॥ ५ ॥

अ०—श्रीगणेशन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोषे अस्मिन् मञ्जुले अलङ्काराख्ये जातके ( ग्रन्थे ) वाहुपक्षैः वृत्तैर्युक्तः आयुर्दायाध्यायः प्रणीतः ॥ २३ ॥

हृद्यैरिति । अध्यायं समापयति हृद्यैः पद्यैरिति ॥ २३ ॥

इति हरभानुविरचितायां जातकालङ्कारटीकायामायुर्दायाध्यायः पञ्चमः ॥ ५ ॥

श्री गणेश दैवज्ञ ने हृदय में रखने योग्य मनोहर पद्यों से सुशोभित विद्वानों को सन्तुष्ट करने वाले इस सुन्दर जातकालङ्कार नामक ग्रन्थ में २२ श्लोकों से इस आयु-र्दायाध्याय को बनाया ॥ २३ ॥

इति जातकालङ्कारे भावबोधिनी-भाषाटीकायां आयुर्दायाध्यायः ।

## अथ वैपरीत्यस्थभावफलाध्यायः ॥ ६ ॥

लग्नाधीशेऽर्थगे चेद्धनभवनपतौ लग्नयातेऽर्थवान् स्याद्
बुद्ध्याचारप्रवीणः परमसुकृतकृत्सारभृद्भोगशीलः ।
भ्रातृस्थानेऽङ्गनाथे सहजभवनपे लग्नयातेऽल्पशक्तिः
सद्बन्धू राजपूज्यः कुलजनसुखदो मातृपक्षेण युक्तः ॥ १ ॥

अन्वयः—चेत् लग्नाधीशे अर्थगे, धनभवनपतौ लग्नयाते अर्थवान् बुद्ध्याचार-प्रवीणः परमसुकृतकृत् सारभृत् भोगशीलः स्यात् । अङ्गनाथे भ्रातृस्थाने सहजभवनपे लग्नयाते अल्पशक्तिः सद्बन्धुः राजपूज्यः कुलजनसुखदः मातृपक्षेण युक्तः स्यात् ॥ १ ॥

लग्नेति । लग्नेशे धनगे धनेशे लग्नगे सति जातो धनवान् बुद्ध्याचारप्रवीणः बुद्ध्याचारेण च निपुणः उत्कृष्टपुण्यकृत् बलवान् भौगैकशीलश्च स्यात् । लग्नेशे सहजस्थे सहजेशे लग्नस्थे अल्पवीर्यः प्रशस्तबन्धुयुक्तः, राजपूज्यः, कुलजातानां सुखदः, मातृपक्षेण सहितश्च स्यात् ॥ १ ॥

जिसके जन्मकाल में लग्नेश द्वितीय भाव में और द्वितीयेश लग्न में हो वह मनुष्य धनवान्, बुद्धिमान् आचारवान्, उत्तम २ पुण्य और यश सम्बन्धी कार्य करनेवाला, कान्तिमान्, बलवान् और भोगशील ( भोग करनेवाला ) होता है। और जिसके जन्मकाल में लग्नेश तृतीय स्थान में और तृतीय भाव का स्वामी लग्न में हो तो वह मनुष्य अल्प शक्तिमान्, उत्तम बन्धुवाला, राजमान्य, कुलजनों को सुख देनेवाला और मातृपक्ष ( नानी, नाना, मामी, मामा, मौसी आदि ) से युक्त होता है ॥१॥

तुर्येशे लग्नयाते तदनु तनुपतौ तुर्यगे स्यात्क्षमावान्
ताताज्ञाराजकार्यप्रगुणमतियुतः सद्गुरुः स्वीयपक्षः ।
लग्नस्थे सूनुनाथे तनुजपदगते लग्ननाथे मनस्वी
विद्यालङ्कारयुक्तो निजकुलविदितो ज्ञानवान्मानसक्तः ॥ २ ॥

अन्वयः—तुर्येशे लग्नयाते तदनु तनुपतौ तुर्यगे ( तदा ) क्षमावान्, ताताज्ञाराजकार्यप्रगुणमतियुतः सद्गुरुः स्वीयपक्षः स्यात् । अथ सूनुनाथे, लग्ननाथे तनुजपदगते मनस्वी, विद्यालङ्कारयुक्तः, निजकुलविदितः, ज्ञानवान्, मानसक्तः स्यात् ॥ २ ॥

तुर्येश इति । चतुर्थे लग्नेशे, लग्नगे चतुर्थेशे जातः क्षमतायुक्तः ताताज्ञाराजकार्यप्रगुणमतियुतः पितुराज्ञायां राजकार्ये च ऋजुमतिः सन् प्रशस्तो गुरुर्यस्य यद्वा सतो गुरुः स्वकीयपक्षे च स्थितः स्यात् । पञ्चमेशे लग्ने, लग्नेशे पञ्चमस्थे सति नरः प्रशस्तमनाः विद्यया भूषितः स्वकुले विख्यातो ज्ञानवान् सदसद्वस्तुज्ञः माने अभिमाने सक्तः 'स्यादिति' ॥ २ ॥

जिसके जन्मकाल में लग्नेश चतुर्थ भाव में हो और चतुर्थेश लग्न में हो वह जातक क्षमावान्, पितृभक्त ( पिता का आज्ञाकारी ), राजकार्य में चतुर, उत्तम गुरु से शिक्षा पाने वाला और अपने पक्ष की बात करनेवाला या अपने बन्धु वर्गों को प्रिय करनेवाला होता है । यदि पञ्चमेश लग्न में हो और लग्नेश पञ्चम भाव में हो तो मनुष्य मनस्वी, विद्वान्, गुणवान्, अपने कुल में प्रधान, ज्ञानवान् और मानी होता है ॥ २ ॥

षष्ठेशे लग्नयाते तदनु तनुपतौ षष्ठगे व्याधिहीनो
नित्यं द्रोहादिसक्तो वपुषि सबलवान् द्रव्यवान् संग्रही स्यात् ।
मूर्तीशे कामयाते मदनसदनपे मूर्तिगे तातसेवी
लोलस्वान्तोऽङ्गनायां भवति हि मनुजः सेवकः शालकस्य ॥ ३ ॥

अन्वयः—षष्ठेशे लग्नयाते तदनु तनुपतौ षष्ठगे ( तदा ) व्याधिहीनः, नित्यं द्रोहादिसक्तः, वपुषि सबलवान्, द्रव्यवान्, संग्रही स्यात् । यदि मूर्तीशे कामयाते मदनसदनपे मूर्तिगे ( तदा ) मनुजः तातसेवी, हि अङ्गनायां लोलस्वान्तः, शालकस्य सेवकः स्यात् ॥ ३ ॥

षष्ठेश इति । षष्ठेशे लग्नगे तदनु लग्नेशे षष्ठगे सति नित्यं रोगरहितः अत एव शरीरे बलवान्, द्रोहादौ सक्तः आदिशब्देन परानिष्टकरणादि ज्ञेयं, संग्रहपरः अतो द्रव्यवान् स्यात् । लग्नेशे सप्तमस्थे सप्तमेशे लग्नस्थे सति तदा मनुजः पितृभक्तः स्त्रीविषये चञ्चलमनाः, शालकस्य भार्याभ्रातुः कार्यकरः स्यात् ॥ ३ ॥

जिस के जन्मकाल में षष्ठेश लग्न में हो और लग्नेश षष्ठ भाव में हो तो वह मनुष्य नीरोग, परद्रोह में रत, पुष्ट शरीर वाला, बलवान्, धनवान् और संग्रही (वस्तु इकट्ठा करने वाला) होता है। यदि लग्नेश सप्तम भाव में हो और सप्तमेश लग्न में हो तो मनुष्य पिता की सेवा करने वाला, स्त्रीविषय के लिये चञ्चल अन्तःकरण वाला और साले की सेवा करने वाला होता है ॥ ३ ॥

अङ्गेशे रन्ध्रयाते निधनगृहपतावङ्गगे द्यूतबुद्धिः
शूरश्चौर्यादिसक्तो निधनपदमियाद्भूपतेर्लोकतो वा ।
देहाधीशे शुभस्थे शुभभवनपतौ देहसंस्थे विदेशी
धर्मासक्तो नितान्तं सुरगुरुभजने तत्परो राजमान्यः ॥ ४ ॥

अन्वयः—अङ्गेशे रन्ध्रयाते, निधनगृहपतौ अङ्गगे (तदा) द्यूतबुद्धिः, शूरः, चौर्यादिसक्तः भूपतेर्लोकतो वा निधनपदमियात्। देहाधीशे शुभस्थे, शुभभवनपतौ देहसंस्थे (तदा) विदेशी, नितान्तं धर्मासक्तः, सुरगुरुभजने तत्परः, राजमान्यः स्यात् ॥ ४ ॥

अङ्गेश इति। लग्नेशेऽष्टमगेऽष्टमेशे लग्नगे द्यूतव्यवहारे निपुणः विक्रमवान्, चौर्यादिसहितः आदिशब्देन वञ्चनासु निपुणः, राजतो लोकतो वा निधनपदं मरणमाप्नुयात्। लग्नेशे नवमस्थे नवमेशे लग्नस्थे सति विदेशवासी, नितान्तं धर्मे रतः, देवाराधने गुरुसेवायां च तत्परः, राजसत्कारभाजनं स्यात् ॥ ४ ॥

जिस के जन्मकाल में लग्नेश अष्टम भाव में हो और अष्टमेश लग्न में हो वह मनुष्य जूआ खेलनेवाला (जुवाड़ी), शूर (साहसी), चोरी कर्म में आसक्त होता है और राजासे या किसी अन्य मनुष्यसे मृत्यु प्राप्त करता है। यदि लग्नेश नवम स्थान में हो और नवमेश लग्न में हो तो मनुष्य परदेशी, अत्यन्त धर्म परायण, देवता और गुरुजनों की सेवा करने वाला और राजमान्य होता है ॥ ४ ॥

कर्मस्थे लग्ननाथे गगनभवनपे लग्नगे भूपतिः स्यात्
ख्यातो लाभे च रूपे गुरुभजनरतो लोलुपो द्रव्यनाथः ।
लाभेशे लग्नयाते तनुभवनपतौ लाभसंस्थे सुकर्मा
दीर्घायुः क्षोणिनाथः शुभविभवयुतः कोविदो मानवः स्यात् ॥ ५ ॥

अन्वयः—लग्ननाथे कर्मस्थे गगनभवनपे लग्नगे (सति) भूपतिः, रूपे लाभे च ख्यातः, गुरुभजनरतः, लोलुपः, द्रव्यनाथः स्यात्। लाभेशे लग्नयाते तनुभवनपतौ लाभसंस्थे मानवः सुकर्मा, दीर्घायुः, क्षोणिनाथः, शुभविभवयुतः, कोविदः स्यात् ॥५॥

कर्मस्थ इति। लग्नेशे कर्मस्थे, कर्मनाथे लग्नगे भूपालः, लाभेन, तद्वत्सुरूपेण च विख्यातः, गुरुसेवायां प्रीतिमान्, लोलुपः चञ्चलचित्तः, द्रव्याणां स्वामी च

स्यात् । लाभेशे लग्नस्थे लग्नेशे लाभस्थे शोभनकर्मा, दीर्घायुः, क्षोणिनाथो राजा, शुभविभवयुतः कोविदो धीरश्च मानवः स्यात् ॥ ५ ॥

जिसके जन्मकाल में लग्नेश दशवें भाव में हो और दशमेश लग्न में हो वह मनुष्य राजा होता है, लाभ करने में और शरीर की सुन्दरता में विख्यात ( प्रसिद्ध ) होता है। गुरुजनों की सेवा में तत्पर, चञ्चल और धनवान् होता है। यदि एकादश भाव का स्वामी लग्न में हो और लग्नेश एकादश भाव में हो तो मनुष्य उत्तम कार्य करने वाला, दीर्घायु, पृथ्वी-पति ( जमीनदार ) अच्छी २ सम्पत्तियों से युत और पण्डित होता है ॥ ५ ॥

लग्नेशे रिःफयाते व्ययसदनपतौ लग्नगे सर्वशत्रु-
र्बुद्धया हीनो नितान्तं कृपणतरमतिर्द्रव्यनाशी विलोलः ।
इत्थं तातादिकानामपि जनुषि तथा खेचराणां हि योगा-
द्वाच्यं होरागमज्ञैस्तदनु तनुपयुग्भार्गवे राजपूज्यः ॥ ६ ॥

अन्वयः—लग्नेशे रिःफयाते व्ययसदनपतौ लग्नगे सति सर्वशत्रुः, नितान्तं बुद्धया हीनः, कृपणतरमतिः, द्रव्यनाशी, विलोलः भवति । इत्थं होरागमज्ञैः जनुषि खेचराणां हि योगात् तातादिकानामपि ( फलम् ) वाच्यम् । तदनु तनुपयुग्भार्गवे ( त्रिकव्यतिरिक्तस्थाने सति ) राजपूज्यः स्यात् ॥ ६ ॥

लग्नेश इति । लग्नेशे रिःफयाते, व्ययनाथे लग्नगे सति सर्वशत्रुः सर्वेषां जनानां शत्रुः, सर्वे शत्रवो यस्येति वा यतो निरन्तरं बुद्धया हीनः बुद्धिरहितः, कृपणतरमतिः अतश्च द्रव्यनाशी, विलोलः, निर्विचारः शीघ्रकारी च स्यात् । इत्थमुक्तप्रकारेण जातकजन्मसमये तातादिकानामपि खेचराणां योगात् फलं होरागमज्ञैर्वक्तव्यम् । अयमर्थः—जातकस्य जन्मलग्नाद्दशमं भवनं तातगृहं तदेव लग्नं प्रकल्प्य तदग्रिमान् क्रमेण धनादिभावान् परिकल्प्य तत्र लग्नभावेशयोर्व्यत्ययस्थितिमवलोक्य लग्नाधीशेऽर्थगे चेद्धनभवनपतौ लग्नयातेऽर्थवान्स्यादित्यादिना उक्तोदाहरणेन तातादीनामर्थवत्त्वादिफलं होराशास्त्रज्ञैर्वाच्यम् । अथ मङ्गलाय शुभफले आदेशं समापयति । तनुपयुग्भार्गवे लग्नेशयुक्ते शुक्रे त्रिकव्यतिरिक्तभावग इति शेषात्तत्र जातो राजपूज्यो भवति । राजपूज्यशब्देन वाञ्छितपदार्थानां सौलभ्यं ध्वन्यते ॥ ६ ॥

जिसके जन्मकाल में लग्नेश द्वादश भाव में हो और द्वादशेश लग्न में हो तो वह मनुष्य सबसे शत्रुता ( वैर ) करने वाला, बुद्धिहीन ( मूर्ख ), अत्यन्त कञ्जूस, धन व्यर्थ में खर्च करने वाला, और नीच विचार वाला होता है। इस तरह जातक-शास्त्रवेत्ता लोग जन्मकालिक ग्रहयोग के अनुसार पिता, भाई, माता आदि के भी फल कहें। और यदि लग्नेश शुक्र से युत होकर त्रिक ( १२।६।८ ) स्थान से अन्यत्र हो तो

मनुष्य राजमान्य होता है अर्थात् मनोऽभिलषित कार्य को सिद्ध करने में समर्थ होता है ॥ ६ ॥

एवं सुमत्या सुफलप्रबोधं श्रीजातकालङ्करणं मनोज्ञम् ।
वृत्तैरनन्तेशमितैर्निबद्धं मया मुदे दैवविदामुदारम् ॥ ७ ॥

अन्वयः—एवं मया स्वमत्या सुफलप्रबोधं, मनोज्ञम्, उदारं, श्रीजातकालङ्करणं दैवविदां मुदे अनन्तेशमितैर्वृत्तैः निबद्धम् ॥ ७ ॥

एवमिति । एवमुक्तप्रकारेण मया यथोचितेन स्वबुद्ध्या उदारं सारनिरूपणं मनोज्ञं पदपदार्थरुचिरं सुफलप्रबोधं स्फुटफलजनकं दैवज्ञानां प्रमोदाय अनन्तेशमितैर्दशाधिकशतप्रमितैर्वृत्तैः श्रीजातकालङ्करणं निबद्धं विरचितम् ॥ ७ ॥

श्रीगणेश कवि कहते हैं कि मैं अपनी बुद्धि के अनुसार इस तरह सुन्दर फलों के बोधार्थ मनोहर और उदार भाव वाला, ज्यौतिषियों के प्रसन्नार्थ ११० श्लोकों में जातकालङ्कार को बनाया ॥ ७ ॥

अथ स्वरचितग्रन्थस्य कविमनोरुचित्वं प्रार्थ्यते—

पुष्करालयवशा गुणसारा जातकोक्तिरमलेव मराला ।
संस्कृता विहरतां भवतां मे मानसेऽतिसरले सुकवीनाम् ॥ ८ ॥

अन्वयः—पुष्करालयवशा गुणसारा संस्कृता ( इयम् ) मे जातकोक्तिः भवतां सुकवीनामतिसरले मानसे अमला मराला इव विहरताम् ॥ ८ ॥

पुष्करेति । मे मम जातकोक्तिः भवतां पूज्यानां कवीनामतिसरले मानसे निर्मला मराला हंसीव विहरताम् । कथम्भूता जातकोक्तिः पुष्करमाकाशं तदेवालयो येषां ते पुष्करालयाः ग्रहाः तेषां वशा अधीना शुभाशुभसूचकग्रहोपयोज्या इत्यर्थः । हंसीपक्षे—पुष्करं जलं तस्यालयो मानसं सरः तद्वशवर्तिनीत्यर्थः । गुणसारा जातकगुणानां सारोपदेशोऽर्थो यस्यां सा । हंसीपक्षे—गुणसारा विहितगुणावैर्युक्ता 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इति अभिधानात् । अमला शुद्धा दोषरहिता इत्यर्थः । हंसीपक्षे—अमला निर्मलेत्यर्थः । संस्कृता मनोज्ञादिवाक्यपरिष्कृता, हंसीपक्षे—निसर्गरुचिरा इत्यर्थः ॥ ८ ॥

ग्रहों के वश से जातक शास्त्र के सारभूत यह परिष्कृत जातकालङ्कार नामक ग्रन्थ गुरुजनों और कविजनों के अत्यन्त कोमल मानस में शुद्ध और स्वच्छ मराली ( हंसी ) की तरह विहार करे ॥ ८ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
भावाध्यायः श्रीगणेशेन वर्यैर्वृत्तैर्युक्तोऽष्टाभिरेष प्रणीतः ॥ ९ ॥

इति जातकालङ्कारे षष्ठोऽध्यायः ॥ ६ ॥

अन्वयः—श्रीगणेशेन वर्यैः हृद्यः पद्यैर्गुम्फिते सूरितोपे अस्मिन् मञ्जुले अलङ्काराख्ये जातके ( ग्रन्थे ) अष्टाभिर्वृत्तैर्युक्त एप भावाध्यायः प्रणीतः ॥ ९ ॥

अथ शालिन्या अध्यायं समापयति । हृद्यः पद्यैरिति । स्पष्टार्थः ॥ ९ ॥

इति हरभानुविरचितायां जातकालङ्कारटीकायां वपरीत्मभावफलाध्यायः पष्ठः ॥ ६ ॥

---

श्रीगणेश दैवज्ञ ने हृदय में रखने के योग्य मनोहर पद्यों से सुशोभित विद्वानों को सन्तुष्ट करने वाले इस जातकालङ्कार नामक ग्रन्थ में आठ श्लोकों से वैपरीत्य, भावफलाध्याय को बनाया ॥ ९ ॥

इति जातकालङ्कारे भावबोधिनी–भापाटीकायां वैपरीत्मभावफलाध्यायः ॥ ६ ॥

---

# अथ वंशाध्यायः ॥ ७ ॥

अथ विशिष्टं स्ववंशं संख्यापयन् ग्रन्थसमाप्तौ देशकालविशेषं प्रख्यापयति त्रिभिः पृथ्वीशार्दूलविक्रीडितैर्वृत्तैः—

अभूदवनिमण्डले गणकमण्डलाखण्डलः
श्रुतिस्मृतिविहारभूर्विबुधमण्डलीमण्डनम् ।
प्रचण्डगुणगुर्जराधिपसभाप्रभातप्रभः
कवीन्द्रकुलभूषणं जगति कान्हजी कोविदः ॥ १ ॥

अन्वयः—अवनिमण्डले ( भारद्वाजकुले ) जगति गणकमण्डलाखण्डलः श्रुतिस्मृतिविहारभूः, विबुधमण्डलीमण्डनम्, कवीन्द्रकुलभूपणम्, प्रचण्डगुणगुर्जराधिपसभाप्रभातप्रभः कान्हजी कोविदः अभूत् ॥ १ ॥

अभूदिति । अवनिमण्डले भारद्वाजकुले नाम्ना कान्हजी कोविदः पण्डितः अभूत् । स कीदृशः ? जगति लोके गणकमण्डलाऽखण्डलो ज्योतिर्विद्वृन्दे आचार्यः "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः" इत्यभिधानात् । श्रुतिस्मृतिविहारभूः प्रत्यहं श्रुतिस्मृतिप्रतिपादनद्वारा तासां विहारभूमिः, विबुधमण्डलीमण्डनं पण्डितशोभादायक इत्यर्थः । प्रचण्डगुणगुर्जराधिपसभाप्रभातप्रभः प्रचण्डा रिपुविजयशालिनो गुणाः सन्धिविग्रहादयो यस्य स गुर्जराधिपः गुर्जरदेशाधिपः तस्य सभायाः प्रभातप्रभेव सभाप्रकाशक इत्यर्थः । कवीन्द्रकुलभूपणं कविश्रेष्ठसन्दोहस्य प्रभावहः ॥ १ ॥

इस भूमण्डल ( संसार ) में विख्यात गुण वाले गुर्जर देशाधिपति की सभा को सुशोभित करने वाले, दैवज्ञों में प्रधान, पण्डितों का हर्ष बढ़ाने वाले, श्रुति-स्मृति में विहार करने वाले, कविकुलशिरोमणि जगत् विख्यात श्रीकान्हजी पण्डित हुये ॥ १ ॥

भारद्वाजकुले बभूव परमं तस्मात्सुतानां त्रयं
ज्यायाँस्तेष्वभवद्ग्रहज्ञतिलकः श्रीसूर्यदासः सुधीः ।
श्रीमान् सर्वकलानिधिस्तदनुजो गोपालनामाऽभव-
च्छ्रीमद्दैवविदां वरस्तदनुजः श्रीरामकृष्णोऽभवत् ॥ २ ॥

अ०—भारद्वाजकुले तस्मात् परमं सुतानां त्रयं बभूव । तेषु ग्रहज्ञतिलकः सुधीः श्रीसूर्यदासः ज्यायान् अभवत् । ततस्तदनुजः श्रीमान् सर्वकलानिधिः गोपालनामा अभवत् । तदनुजः दैवविदां वरः श्रीरामकृष्णः अभवत् ॥ २ ॥

भारेति । तस्मात्कान्हजीकोविदात्परमनुत्कृष्टं सुतानां त्रयं बभूव । तेषु ज्यायान् ज्येष्ठ ग्रहज्ञतिलकः गणकश्रेष्ठः सुधीः श्रीसूर्यदासः अभवत्तदनुजः ततः पश्चाज्जातः श्रीमान् वेदवित् सर्वकलानिधिः सर्वकलाकुशलः गोपालनामा अभवत् । तदनुजः श्रीमतां दैवज्ञानां च श्रेष्ठः श्रीरामकृष्णोऽभवत् ॥ २ ॥

भारद्वाज गोत्र में श्री कान्हजी के श्रेष्ठ गुणों से सम्पन्न तीन पुत्र हुये । उनमें सब से ज्येष्ठ दैवज्ञों में श्रेष्ठ विद्वान् श्रीसूर्यदास नाम के हुये । और सब से छोटे दैवज्ञों में श्रेष्ठ श्रीरामकृष्ण नामक हुये ॥ २ ॥

शाके मार्गणरामसायकधरा १५३५ संख्ये नभस्ये तथा
मासे ब्रध्नपुरे सुजातकमिदं चक्रे गणशः सुधीः ।
छन्दोऽलंकृतिकाव्यनाटककलाभिज्ञः शिवाध्यापक-
स्तत्र श्रीशिवविन्मुदे गणितभूर्गोपालसूनुः स्वयम् ॥ ३ ॥
ये पठिष्यन्ति दैवज्ञास्तेषामायुः सुखं शिवम् ।
भूयात्कैरवकुन्दाभा सुकीर्तिः सर्वतो दिशम् ॥ ४ ॥

अ०—तत्र गोपालसूनुः गणेशः सुधीः छन्दोलंकृतिकाव्यनाटककलाभिज्ञः शिवाध्यापकः गणितभूः स्वयं मार्गणरामसायकधरासंख्ये शाके तथा नभस्ये मासे ब्रध्नपुरे शिवविन्मुदे इदं सुजातकं चक्रे ॥ ३ ॥

ये दैवज्ञाः 'इमं ग्रन्थं' पठिष्यन्ति तेषामायुः सुखं शिवं भूयात् । तथा सर्वतो दिशं कैरवकुन्दाभा सुकीर्त्तिः भूयात् ॥ ४ ॥

शाक इति । तत्र गोपालसूनुः गणेशः मार्गणरामसायकधरासंख्ये शाके पञ्चत्रिंशदधिकपञ्चदशभिते ( १५३५ ) शाके नभस्ये भाद्रपदमासे ब्रध्नपुरे सूर्यपुरे इदं सुजातकं शोभनं जातकं श्रीशिवाख्यविदः प्रमोदाय चक्रे कृतवान् । कथम्भूतो गणेशः ? शिवाध्यापकः शिव अध्यापक उपाध्यायो यस्य । छन्दोऽलंकृत्यादिविद् छन्दांसि मात्रावर्णभेदभिन्नवृत्तानि अलंकृतयः उपमाद्यलङ्काराः काव्यानि मघादि-

भेदेन द्विविधानि नाटकानि संस्कृतप्राकृतभाषानिबद्धानि कलाश्चित्रकर्माद्याः गणित-भूर्गणिताश्रयः सिद्धान्तविदित्यर्थः ॥ ३-४ ॥

उसमें श्रीगोपालदासजी के सुपुत्र छन्द, अलङ्कार, काव्य, नाटक और कला शास्त्र ( चित्र विद्या ) तथा गणित सिद्धान्त के वेत्ता श्रीगणेशदैवज्ञ ने शिवनामक अपने अध्यापक ( गुरु ) को प्रसन्न करने के लिये इस जातकालङ्कार नाम के ग्रन्थ को शाके १५३५ भाद्रपद मास में सूर्यपुर-नामक गाँव में बनाया ॥ ३ ॥

जो दैवज्ञ इसे पढ़ेंगे, उनको आयु, सुख और कल्याण मिलेगा; तथा दश दिशाओं में कुन्द पुष्प के समान स्वच्छ सुयश का विकास होगा ॥ ४ ॥

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातके मञ्जुलेऽस्मिन् ।
वंशाध्यायः श्रीगणेशेन वृत्तैर्युक्ता वेदैः सैकसंख्यैः प्रणीतः ॥ ५ ॥

इति जातकालङ्कारे सप्तमोध्यायः ॥ ७ ॥

अ०—श्रीगणेशेन वर्यैः हृद्यैः पद्यैर्गुम्फिते सूरितोपे अस्मिन् मन्जुले अलङ्काराख्ये जातके ( ग्रन्थे ) सैकसंख्यैः वेदैः वृत्तैः युक्तः वंशाध्यायः प्रणीतः ॥ ९ ॥

अध्यायं पूरयति—हृद्यैः पद्यैरिति । स्पष्टार्थः ॥ ५ ॥

श्रीमच्छुक्ककुले महीपतियशःशुक्लीकृते जातके
आसीत्कृष्णदयाभरप्रमुदितः कृष्णो जयाद्यः कृती ।
तत्पुत्रेण विभाविताितरुचिरा सज्जातकालंकृति-
श्रीरेषा हरभानुना मतिमतां मोदाय भूयाच्चिरम् ॥

इति श्रीमच्छुक्लोपनामकहरभानुभाविता जातकालङ्कारटीका समाप्ता ॥

श्रीगणेश दैवज्ञ ने हृदय में रखने योग्य मनोहर पद्यों से सुशोभित विद्वानों को सन्तुष्ट करने के लिये इस जातकालङ्कार नामक ग्रन्थ में ५ श्लोकों से वंशाध्याय को बनाया ॥ ५ ॥

इति जातकालङ्कारे मुङ्गेर-मण्डलान्तर्गत 'बरौना' ग्रामवास्तव्यज्यौतिषाचार्य-
ज्यौतिषतीर्थ-काव्यरत्नझोपाख्य-पं० श्रीदीनानाथशास्त्रि-कृत-
सान्वय-भावबोधिनी-भाषाटीकायां वंशाध्याय समाप्तः ।

समाप्तश्चायं ग्रन्थः ।

# हिन्दीटीकाकर्त्तुः परिचयः

जयन्ति नित्यं गुरवो मदीयाः सच्छास्त्रसंसेवितपादपद्माः ।
श्री "लोकनाथा" विबुधा दयालवः ध्याये तदीयं चरणाम्बुजद्वयम् ॥ १ ॥

विहारे "मुंगेरे" प्रथितगुणधामा मम पुरी
"बरौन" नाम्नीयं विलसति द्विजाग्र्यैर्गुरुजनैः ।
तदस्यां सञ्जातो लघुमतिरहं मैथिलकुले
विनम्रो "दीनानाथ" इति वर-"वंशीधर"जनुः ॥ २ ॥

गुणश्रेणी यस्मिन् मणिगण इवाभाति नितरां
गुणानन्दः प्राज्ञो मम गुरुवरो ज्योतिपि गुरुः ।
अवापं यत्पादाम्बुजयुगलपूजायतमना
अहं प्रज्ञामाद्यां सदयहृदयानुग्रहवैः ॥ ३ ॥

क्लेशाधिक्यमवाप्य सम्प्रति यमारब्धुं यते निश्चितं
छात्राणां सविशेषतो यदि भवेल्लाभस्ततो मे श्रमः ।
साफल्यं समवाप्नुयात्सुनियतं नो चेद्वृथा जल्पन-
माशासे च गिरीशपादकृपया सर्वेष्टसिद्धिर्भवेत् ॥ ४ ॥

गजाङ्कनन्दभू (१९९८) वर्षे पञ्चदश्येन्दुवासरे ।
कार्त्तिकस्य सिते पक्षे टीका सम्पूर्णतामगात् ॥ ५ ॥

॥ शुभमस्तु ॥ श्रीरस्तु ॥

# ज्योतिष-ग्रन्थाः

१ जातकपारिजातः । श्री वैद्यनाथ कृत । पं० कपिलेश्वर चौधरी कृत 'सुधाशालिनी' संस्कृत टीका तथा पं. मातृप्रसाद पाण्डेय कृत 'विमला' हिन्दी टीका सहित ५०–००

२ सूर्यसिद्धान्तः । पं० कपिलेश्वर चौधरी कृत 'तत्त्वामृत' संस्कृत टीका नोट्स आदि सहित २५–००

३ नारदसंहिता । विमला भाषा टीका एवं विविध टिप्पणियों से युक्त हिन्दी व्याख्याकार–पं० रामजन्म मिश्र ३०–००

४ बृहत्पाराशर-होराशास्त्र । श्री पराशर मुनिविरचित । सविमर्श 'सुधा' व्याख्यासहित । सम्पादक तथा व्याख्याकार–दैवज्ञ श्री पं० देवचन्द्र झा ५८–००

५ नरपतिजयचर्यास्वरोदयः । श्री नरपति कवि कृत । पं० गणेशदत्त पाठक कृत 'सुबोधिनी' संस्कृत हिन्दी टीका सहित ३५–००

६ ...प्रचण्डेश्वर । सान्वय हिन्दी व्याख्या विभूषित, व्याख्याकार–पं० रामजन्म मिश्र ७–५०

७ सिद्धान्तशिरोमणिः । भास्कराचार्य कृत । स्वकृत 'वासना भाष्य' सहित । पं० मुरलीधर ठाकुर कृत 'प्रभा-वासना' टीका, नोट्स, प्रमाण आदि युक्त । प्रथम भाग १०–००

८ ...र्तमार्तण्ड । नारायण दैवज्ञ कृत । पं० कपिलेश्वर शास्त्री कृत 'मार्तण्ड प्रकाशिका' संस्कृत हिन्दी टीका सहित १५–००

९ ...ापीयत्रिकोणगणितम् । श्री नीलाम्बर झा कृत । पं० श्री अच्युतानन्द झा कृत 'विविध वासना' विषद टीका युक्त ५–००

१० ...लाघवम् । श्री गणेश दैवज्ञ कृत । श्री विश्वनाथ दैवज्ञ कृत संस्कृत टीका तथा श्री युगेश्वर झा कृत 'माधुरी' संस्कृत हिन्दी टीका नोट्स प्रयोग नवीन उदाहरण आदि सहित ३८–००

---



...स्थान चौखम्भा संस्कृत संस्थान, वाराणसी–२२१००१